युक्तः अपहृतत्रिरूपगन्धं सोमं कुर्वन्ति ततो वायुनाऽपहृतः सोमस्य गन्धः। ऐन्द्रवायव-वाग्रयो एतत्प्रतिपादितम् तदेतदस्माभिर्व्याख्यातं विभक्तिव्यत्ययेन। यद्वा। यो वायुरूपः सोमः पूतः यस्य पवित्रेण प्रत्यङ् नीचैः अधोमुखम् अतिस्रुतः। स्रु गतौ। अतिक्रम्य गतः। स सोमः। इन्द्रस्य युज्यः समानयोगो च सखा च समानख्यानः। कथमिन्द्रं हिनस्तीति

ङ्क्सोमोऽअतिस्रुतः॥ इन्द्रस्ययुज्यःसखा ॥ ३१ ॥ कुविदङ्ग। यवमन्तोयवंञ्चिद्यथादान्त्यनुपूर्वंव्वियूय। इहेहैषाङ्कृणुहिभोजनानियेबर्हिषोनमऽउक्तिंयजन्ति। उपयामगृहीतोस्यश्विभ्यान्त्वा

येनः ॥ ३१ ॥ ग्रहं गृह्णाति। "कुविदङ्ग"। अनिरुक्ता सौमी त्रिष्टुप्। कुविदिति बहु-नाम। अंगेति क्षिप्रनाम। हे सोम यथा केचिज्जनपदाः कुविदङ्गत्वेनम् अङ्गं क्षिप्रम् यव-मन्तः बहुयवाः यतः सोमः यवं चित्। चिच्छब्दो वितर्के। यवं वितर्क्य दान्ति। दाप् लवने। लुनन्ति। "अनुपूर्वम्"। आनुपूर्वेण वियूय पृथक्कृत्य अभिख्याय एथम् "इहेहैषां

क्षणुहि भोजनानि" भोग्यानि वस्तूनि । "ये वर्हिषो नम उक्तिं यजन्ति" । ये यजमाना वर्हिषः उपरिस्थिताः नमउक्तिम् । नम इत्यन्ननाम । उक्तिर्वचनम् । हविर्लक्षणं नमोन्नमादाय उक्तिं यज्यामभिधाय यजन्ति यागं कुर्वन्ति । "उपयामगृहीतोसि" इत्यादि व्याख्यातम् ॥ ३२ ॥ "युवꣳ सुरामम्" । अनुवाक्या । पुत्रमिव याज्या । अनुष्टुप्त्रिष्टुभौ अश्विसरस्वतीन्द्रदैवत्ये । तत्रे-

न्द्राय त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ॥ ३२ ॥ युवꣳ सुरामम् । युवꣳ सुराममश्विना नमुचावासुरे सचा ॥ विपिपाना शुभस्पतीऽइन्द्रं कर्म्मस्वावतम् ॥ ३३ ॥ पुत्रमिव पितरौ । पुत्रमिव पितरावश्विनोभेन्द्रा

तिहासमाचक्षते । नमुचिर्नामासुर इन्द्रस्य सखिभूत आस । स इन्द्रस्य विश्वस्तस्य सुरया वीर्यं पपौ । सोश्विनौ च सरस्वतीं चोपाधावत् पीतवीर्योहं नमुचिना ततोपां फेनं वज्रमसिञ्चत् तेनेन्द्रो नमुचेः शिरश्चिच्छेद । तत्र लोहितमिश्रः सुरासोमोतिष्ठत् तदेतदुच्यते । हे अश्विनौ युवां सुरामम् । सुरामयं सोमं सुरमणीयं वा । नमुचौ आसुरे अवस्थितम्

"सचा"। सहभूत्वा एकीभूय। "विपिपाना"। विविधं पिबन्तौ। हे शुभस्पती स्वामिनौ इन्द्रं कर्मसु निमित्तभूतेषु स्वकर्मकरणार्थम् "आवत" पालयतं स्वकर्मक्षमं कुरुतमित्यर्थः ॥ ३३ ॥ "पुत्रमिव पितरौ"। यथा मातापितरौ पुत्रं पालयतः एवमुभावप्यश्विनौ हे इन्द्र, त्वाम् "अवथुः" पुरुषव्यत्ययः। त्वां पालितवन्तौ। काव्यैः कविकर्मभिः मन्त्रदर्शनैरित्यर्थः। "दंसनाभिः"। दंस इति कर्मनाम। कर्मभिश्च मन्त्रैश्चेत्यर्थः। कथमवगम्यते अश्विनौ

वथुः काव्यैर्द्दंसनाभिः ॥ यत्सुरामं व्यपिबः शचीभिः सरस्वती त्त्वा मघवन्नभिष्णक् ॥ ३४ ॥ [४] ॥ ८ ॥ इति दशमोऽध्यायः १० ॥

त्वां पालितवन्तावित्याह। "यत्सुरामं व्यपिबः शचीभिः"। यस्मात्त्वं सुरामयं विविधं पीतवानसि। शचीभिः कर्मभिः। नमुचेः शिरश्छेदनं कर्म कृत्वा स्ववीर्येण। नह्यदृढ एतत्कर्म कर्त्तुं शक्त इत्यभिप्रायः। "सरस्वती त्वा मघवन्नभिष्णक्"। सरस्वती च त्वां हे मघवन् धनवन् अभिष्णक्। अभिष्णक्शब्दः कण्ड्वादिषु पठ्यते तस्यैतद्रूपम् अभिषज्यताभिषजितवती सरस्वती च त्वाम् ॥ ३४ ॥ इति उवटकृतौ मन्त्रभाष्ये दशमोऽध्यायः ॥ १० ॥

अष्टावध्याया अग्निसम्बद्धास्तान्प्रजापतिर्ददर्श। साध्यावा ऋषयः प्रजापतेः प्राणभूताः। अथ पञ्चम्या दर्शितः प्रजापतिः प्रथमां चितिमपश्यत् प्रजापतिरेव तस्या आर्षेयम्। देवा द्वितीयां चितिमपश्यन् त एव तस्याः आर्षेयम्। इन्द्राग्नी च विश्वकर्मा च तृतीयां चितिमपश्यन् त एव तस्या आर्षेयम्। ऋषयश्चतुर्थीं चितिमपश्यन् ऋषय एव तस्या आर्षेयम्। परमेष्ठी पञ्चमीं चितिमपश्यत् परमेष्ठ्येव तस्या आर्षेयमिति। अथवा प्रतिकर्मद-

युञ्जानः प्रथमम्। युञ्जानः प्रथमं मनस्तत्वाय सविता धियः॥ अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत्॥ १ ॥ युक्तेन मनसा।

र्शिनः। सवितैतानि सावित्राण्यपश्यदिति। "युञ्जानः प्रथमं मनः"। अष्टौ कण्डिकाः सविता दृष्टाः सवितृदेवत्याः ताभिः सन्तताभिराहुतिर्हूयते। प्रथमानुष्टुप्। अन्यारम्भे सविता युञ्जानः। युञ्जानः प्रथमं मनः ततोनन्तरम् "तत्वाय"। तनु विस्तारे। ल्यो यप् छान्दसः उपजनः। "तनित्त्वा"। विस्तार्य्य। "धियः" बुद्धीः। मनसा पर्य्यालोच्य बुद्ध्या

(१) युञ्जानएकादशप्रतूर्त्तं ठ॰षोडशदेवस्यत्वादशापोदेवीर्द्वादशापोह्येकादशादितिद्वापञ्चाकूतिमष्टादशसमन्वाग्नीतिः॥

वारधाय्येत्यर्थः । "अग्ने ज्ज्योतिः"। अग्निरवन्धि ज्योतिः । पञ्चस् पशुषु प्रविष्टम् निचाय्य । उपलभ्य । यथा वा अग्निः समिद्धोदीप्यत इत्यादिना । ततः पशुक्रमान्विताया: "पृथिव्याः अध्याभरत्" अध्याहृतवानग्निम् इष्टकां कृत्वा चितवानग्निम् । अतो प्रजापतिः कर्त्तोपदिष्टः तदनुकृत्या इदानीं तना यजमानायोपदिश्यन्ते । "प्रजापतिर्वै युञ्जान" इति ॥ १ ॥ युक्तेन मनसा । गायत्री । युक्तेन एकाग्रेण मनसा वयं देवस्य सवितुः सवे । प्रसवे वर्त्तमानाः स्वर्ग्याय स्वर्गसाधनाय कर्मणे । शक्त्या । यथाशक्त्या प्रयत्नं कुर्म इति शेषः ॥२॥

व्यन्देवस्यसवितुःसुवे । स्वर्ग्यायशक्त्या ॥ २ ॥ युक्त्वाय सविता । देवान्त्स्वर्यतो धियादिवम् । बृहज्ज्योतिःक

युक्त्वा"। अनुष्टुप् । सविताप्रसुवातितानिति तदो दर्शनादिह यद्योगः कर्त्तव्यः नित्यसंबन्धौ हि यत्तदौ । 'युक्ताय"। यकार उपजनोनर्थान्तरवचनः । युक्ताय सविता यत् देवान् अग्रकर्मणि अन्येन कर्मणा स्वर्यतः स्वर्लोकं गच्छतः "धिया" बुद्धा कर्मणा वा । "दिवं" द्योतनं स्वर्गम् । "बृहत्" महत् 'ज्योति' रादित्यलक्षणम् । आत्मत्वेन "करिष्यतः" संस्कुर्वतः ।

"सविता प्रसुवाति" प्रसौति अभ्यनुजानाति । "तान्" देवान् ॥ ३ ॥ "युञ्जतेमनः" इत्यादि व्याख्यातम् । इयांस्तु विशेषः । प्रजापतिर्विप्रः इहद्विपश्चिदित्युच्यते । देवाः विप्राः ॥ ४ ॥ "युजेवाम्" । त्रिष्टुप् । दम्पतीयजमानौ वामित्यनेन पदेनोच्यते । "युञ्जे" युनज्मि । "वां"

रिण्ययुतऽसंवितापप्रसुंवातितान् ॥ ३ ॥ युञ्जतेमनंः । युञ्जतेमनंऽउत युंञ्जतेधियोव्विप्राव्विप्रंस्यबृहुतोविंपुश्चितंः ॥ व्विहोत्रांदधेव्वयुना विदेकुऽइन्न्मुहीदेवस्यंसवितुःपरिंष्टुतिंः ॥ ४ ॥ युजेवाम्ब्रह्मपूर्व्यं न्नमोभिर्व्विश्लोकंऽएतुपथ्येवसूरेः । शृणवन्तुव्विश्वेऽअमृतंस्यपुत्त्रा

युवाभ्यामर्थाय । "ब्रह्मपूर्व्यन्नमोभिः" । प्राणाः सप्त ऋषयो ब्रह्माणब्रह्मशब्देनोच्यन्ते । पूर्व्यशब्देन च नमोभिरन्नैः सहितम् । इयमेवाहुतिरन्नशब्देनोच्यते । किं प्रयोजनमिति चेत् । "विश्लोकएतुपथ्येवसूरेः" । विविधमेतु आगच्छतु श्लोकः कीर्तिः सूरेः पण्डि-

तस्य। यजमानस्य। कथमिव। "पथ्येव"। पथः अनपेता पथ्या। यज्ञमार्गे प्रहताहुतिरुभय-
लोकसंचारिणी भवति। एवं यजमानस्योभयलोकसंचारी श्लोको भवत्विति अभिप्रायः।
"शृण्वन्तु" च "विश्वे" सर्वे। "अमृतस्य" अमरणधर्मिणः प्रजापतेः "पुत्राः देवाः कीर्तिम्"।
"आये धामानि दिव्यानि तस्थुः"। "आतस्थुः आस्थिताः ये देवाः धामानि स्थानानि दिव्या-

ऽआये धामानि दिव्यानि तस्थुः ॥ ५ ॥ यस्य प्रयाणम् । यस्य प्रयाणमन्वन्यऽइद्ययुर्देवा देवस्य महिमानमोजसा। यः पार्थिवानि वि

नि ॥ ५ ॥ "यस्य प्रयाणम्"। जगती। सवितेव प्रजापतिरत्राभिप्रेयते। व्यवहितपदप्राय-
मिदं मन्त्रवाक्यम्। यस्य देवस्य प्रयाणम् "अनु" प्रगमनमनु। "अन्ये" "देवाययुः"।
जग्मुः। इन्द्रादयोऽन्ये। "महिमानमोजसा"। महिमानं महाभाग्यं विभूतिम् ओजसा
बलेन ययुर्देवाः। "यः" स सविता देवः "पार्थिवानि रजांसि विममे महित्वना"। लोका
रजांस्युच्यन्ते। पृथिवीमस्तीन् लोकान्मिमीते स्वकीयेन महाभाग्येन। "स एतशः" एतज्जग-

स्थावरजङ्गमं प्राणभावेनशेत इति सविता एतश इत्युच्यते। यद्वा। एतश इत्यश्वना-
मसु पठितम्। सोऽश्वरूपेण समस्तमेतज्जगदवष्टभ्य स्थितः। तदुक्तम्। "उषा वा अश्व-
मेध्यस्य शिरः" इत्यादिना। सूरादश्वंवसवोनिरतष्टेति च ॥ ६ ॥ "देवसवित" रिति व्याख्या-

सुमेसऽएतंशोरजाᳬंसिदेवःसविताममहित्वना ॥ ६ ॥ देवंसवितः।
देवसवितःप्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दिव्योगन्धर्वःकेतपूः
केतन्नःपुनातुव्वाचस्पतिर्व्वाचन्नःस्वदतु ॥ ७ ॥ इमन्नोदेवसवित
र्य्यज्ञम्प्रणयदेवाव्व्यᳬसखिविदᳬसत्राजितन्धनजितᳬस्वर्जितम् ।

तम्। इयांस्तु विशेषः। वाचस्पतिर्वाचं नः स्वदतु इति वाचा वा इदं कर्म प्राणो वाच-
स्पतिरिति ॥ ७ ॥ "इमं नो देव"। आत्र्यवसानात्र्यष्टुः। इमं यज्ञं नोऽस्माकं हे देवसवितः
प्रणय प्रापय। कथंभूतं यज्ञम्। "देवाव्यम्"। देवा यस्मिन्नव्यन्ते तर्प्यन्ते स देवाव्यः
"सखिविदम्"। सखाया यत्र विद्यन्त ससखिवित् सखीन्वा यो विन्दते ससखिवित् तं सखि-

पर्यस्य" । "अङ्गिरस्वदाभर" । अङ्गिरसा तुल्यम् अग्निवद्वा आभर । हृग्रहोर्भः छन्दसि इत्येति हकारस्य भकारः । आहर । त्रैष्टुभेन छन्दसा अङ्गिरस्वत् ॥ ९ ॥ "अभ्रिरसि" । नारी स्त्री त्वमसि । किञ्च "त्वया वयम् अग्निं शकेम" । खनितुं "सधस्थे" ।

मङ्गिरुस्वदाभंरुत्रैष्टुंभेनुच्छन्दंसाङ्गिरुस्वत् ॥ ९ ॥ अभ्रिंरसि । नार्य॑सि त्वया॒ वयमुग्निꣳशंकेमुखनिंतुꣳसुधस्थुऽआ । जागंतेनुच्छन्दं॒साङ्गिरुस्वत् ॥ १० ॥ हस्तंऽआधायं । सवितावि॒भ्रदभ्रिंꣳहिरुण्ययीम् ॥ अ॒ग्नेर्ज्योतिंर्निचाय्यंपृथि॒व्याऽअध्याभंरुदानुंष्टुभेनुच्छन्दं

आ । समानस्थानेषु वर्त्तमाने पृथिव्याः । आकारोनर्थकः । जागतेन छन्दसा । अङ्गिरस्वत् ॥ १० ॥ अभ्रिमभिमन्त्रयते । हस्त आधाय । अनुष्टुप् यजुरन्ता । अनुष्टुभेनेत्यादि यजुः । हस्ते अभ्रिमादाय सविता ततस्तामेवाभ्रिं बिभ्रत् धारयन् । "हिरण्मयीं" मन्त्रमयीं छन्दोमयीं वा । "अग्नेर्ज्योतिर्निचाय्य" निभाल्य दृष्ट्वा ततः "पृथिव्या" अपि सकाशात् "आभ-

जिदम्। "सत्राजितम्" सत्राशब्दः सत्यवचनः। सत्यं बृत्ता यो जयति स सत्राजित् तं सत्राजितम्। "धनं" यो गवादिजयतीति धनजित् तं धनजितम् स्वर्गलोकं यो जयति स स्वर्जित। तं स्वर्जितं "ऋचास्तोमम्" गायत्र्यनवसाना। ऋचा ऋग्वेदेन सह स्तोमं त्रिवृदादि समर्द्धय। गायत्रेण साम्ना सह रथंतरं समर्द्धय। "वृहत्" महत्। कथंभूतं महत्। "गायत्रवर्त्तनि"।

ऋचास्तोमꣳ समर्द्धयगायत्रेणरथन्तरम्बृहद्गायत्रवर्तनिस्वाहा ॥ ८ ॥
देवस्यत्त्वा । सवितुःप्प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥
आददेगायत्रेणच्छन्दसाङ्गिरस्वत्पृथिव्याःसधस्थादग्निम्पुरीष्य

गायत्रं यस्य बृहतो वर्तनि वर्त्मभूतम् ॥ ८ ॥ अग्निमादत्ते "देवस्यत्त्वा"। व्याख्यातम्। "आददे"। गृह्णामि अहं गायत्रेण छन्दसा। "अङ्गिरस्वत्"। अङ्गिरसा तुल्यमङ्गिरोवदिति प्राप्ते 'अयस्मयादीनिच्छन्दसी तिभसंज्ञा। यतो तु अग्निवदिति व्याख्यातम्। अग्निरुच्यते। त्वं च गृहीता सती पृथिव्याः सधस्थानात्। समानस्थानात्। "अग्निं पुरीष्यं

पथ्यस्व" । "अङ्गिरस्वदाभर" । अङ्गिरसा तुल्यम् अग्निवद्वा आभर । हृग्रहोर्भः छन्दसि इत्येति हकारस्य भकारः । आहर । त्रैष्टुभेन छन्दसा अङ्गिरस्वत् ॥ ९ ॥ "अग्निरसि" । नारी स्त्री त्वमसि । किञ्च "त्वया वयम् अग्निं शकेम" । खनितुं "सधस्थे" ।

मङ्गिरुस्वदाभरुत्रैष्टुंभेनुच्छन्दंसाङ्गिरुस्वत् ॥ ९ ॥ अभ्रिंरसि । नार्य्यसि त्वयां व्वयमुग्निᳬ शंकेमुखनिंतुᳬ सुधस्थुऽआ । जागंतेनुच्छन्दंसाङ्गिरुस्वत् ॥ १० ॥ हस्तंऽआधाये । सविताविभ्रदभ्रिंᳬ हिरुण्ययीम् ॥ अग्नेर्ज्योतिंर्न्निचाय्यंपृथिव्याऽअध्याभंरदानुष्टुभेनुच्छन्दं

आ । समानस्थानेषु वर्त्तमाने पृथिव्याः । आकारोऽनर्थकः । जागतेन छन्दसा । अङ्गिरस्वत् ॥ १० ॥ अभ्रिमभिमन्त्रयते । हस्त आधाय । अनुष्टुप् यजुरन्ता । अनुष्टुभेनेत्यादि यजुः । हस्ते अभ्रिमादाय सविता ततस्तामेवाभ्रिं बिभ्रत् धारयन् । "हिरण्मयी" मस्तमयीं छन्दोमयीं वा । "अग्नेर्ज्योतिर्न्निचाय्य" निभाल्य दृष्ट्वा ततः "पृथिव्या" अपि सकाशात् "आभ-

रत्" आह्वतवान् आनुष्टुभेन छन्दसाङ्गिरस्वत् ॥ ११ ॥ अश्वगर्दभाजानभिमन्त्रयते। यथा-सेख्यम्। प्रतूर्त्तंवाजिन्निति तिसृभिर्ऋग्भिः तिस्र एत एवाश्वादयो देवताः। आद्या आ-स्तारपङ्क्तिः। हेवाजिन् प्रतूर्त्तम् त्वरतेरेवैतद्रूपम् प्रकर्षेण तूर्त्तं तूर्णम् "आद्रव" आ-गच्छ। "वरिष्टामनुसंवतम्"। वरिष्ठास्ततमां संवतमनु। संपूर्वस्य वनोतेः क्विए एतद्रू-

साङ्गिरस्वत् ॥११॥ [११] प्रतूर्त्तंवाजिन्। प्रतूर्त्तंवाजिन्नाद्द्रव्वरिंष्ठामनुंसंव्वतंम्॥ दिवितेजन्मंपरममन्तरिंक्षेतवुनाभिंःपृथिव्यामधियोनिरित्॥ १२॥ युञ्जाथाᳪरासंभम्। युञ्जाथाᳪरासंभंयुवमु

पम्। संभजनमुच्यते। विमतसं वाजिन्नागच्छ उत्कृष्टं संभजनमस्त्वित्यभिप्रायः। तदु-त्कृष्टं सभजनमधुनादर्शयितुमाह। "दिवि द्युलोके" ते "तव आदित्यरूपेण" जन्मभविष्यति। आगतस्य यतः "पर" सुत्कृष्टम् किञ्च। "अन्तरिक्षे तव नाभिः" उदरम् "पृथिव्याम् अधि" उपरि "योनिः" स्थानं मातावित्यर्थः। (१) उदितिपादपूरणे। विरा-

उक्तरूपेणाश्वः स्तूयते । तदुक्तम् "उपालाश्वस्य" मेध्यस्य शिर इति ॥ १२ ॥ रासभम-भिमन्त्रयते । "युञ्जाथाम" । गायत्री । अध्वर्युयजमानावुच्येते युञ्जाथां "रासभं" गर्द्दभम् युवम् । युवाम् "अस्मिन्यामे" अस्मिन्कर्मणि । "वृषा सेक्ता गर्द्दभः स ययोर्वसुर्धनं तौ वृषण्वसू तयोः संबोधनं हे वृषण्वसू । कथंभूतं रासभम् "अग्निं भरन्तम्" अग्निं संहरन्तम् ।

स्मिन्यामेवृषण्वसू ॥ अग्निम्भरन्तमस्मयुम् ॥ १३ ॥ योगेयो गेतवस्तरम् । योगेयोगेतवस्तरंवाजेवाजेहवामहे ॥ सखायऽइन्द्र

मस्मयुम् अस्मान्कामयमानम् । "अस्मत्प्रियतमि" तिश्रुतिः । युंजाथामिति संबन्धः ॥ १३ ॥ अजमभिमन्त्रयते । "योगेयोगे" । गायत्री । "योगे योगे तव स्तरम्" । तव इतिरत्तनाम कर्मणिकर्मणि वलिनमुत्साहवन्तमेतमजम् "वाजेवाजेहवामहे" । अन्ने अन्ने दातव्ये देवानां मनुष्याणां चाह्वयामः । हे "सखायः" ऋत्विग्यजमानाः । "इन्द्रम्" इन्द्रियवन्तं वीर्यवन्तम् । "ऊतये" । अवनाय । आह्वयाम इति संबन्धः ॥ १४ ॥

अश्वरासभवृक्रामयति । "प्रतूर्वन्नेहि"। विराड्रूपा यजुर्गर्भा । उर्वन्तरिक्षं वी-हीति यजु. । अर्द्धचेनाश्वः स्तूयते । प्रतूर्वन् प्रत्वरमाण एहि आगच्छ । अवक्रामन् अशस्तीः। पादैरवष्टभ्य अशस्तीः। पाप्मनोदुष्टान्। आगमने को गुण इति चेत् । "रुद्रस्यभगवतोगाणपत्यम् गणपतित्वम् लप्स्यस इति शेषः। अतो "मयोभूः"। सुखस्य भावयिता

मूतये ॥ १४ ॥ प्रतूर्वन्नेहि । प्रतूर्वन्नेह्यवक्रामन्नशस्तीरुद्रस्यगाणपत्यम्मयोभूरेहि ॥ उर्वन्तरिक्षंवीहिस्वस्तिगव्यूतिरभयानिकृण्वन्पूष्णासयुजासह ॥ १५ ॥ पृथिव्याःसधस्थात् । पृथिव्याः

भूत्वा एहि । रासभमुक्रामयति । उर्वन्तरिक्षं वीहि । उरुविस्तीर्णमन्तरिक्षं रक्षोभिरनाकुलितं विइहि विविधमागच्छ। "स्वस्तिगव्यूतिः" स्वस्तीःपापविनाशनाम । गव्यूतिर्मार्गः भयवर्जितः । प्रभूतयवसोदकमार्गः सन् त्वम् "अभयानिकृण्वन्" कुर्वन्नटन्विश्यजमानानाम् । "पूष्णा" पृथिव्या "सयुजा" समानयोगिन्या सह । नेकः प्रपद्यताख्यानमित्यपेतद्दर्शयति ॥ १५ ॥ पञ्चमु-

त्कामयति। "पृथिव्याः सधस्थात्"। पृथिव्याः सहस्थानात् अग्निम् व्याख्यातम्। ब्रह्माध्वर्युर्यजमाना गच्छन्ति। "अग्निं पुरीष्यम्"। अच्छाभेराप्नुमिति शाकपूणिः। "अग्निं पशव्यम्" अङ्गिरस्वदभिगच्छामः। यद्वा आप्तुं गच्छामः। अनड्वाहुपुरुषमीक्षते। अग्निं पशव्यम् अङ्गिरस्वत् संभरिष्यामः॥ १६॥ वल्मीकवपामदाय छिद्रेण पिण्डमीक्षते (१)। "अन्व-

## सुधस्थादुग्निम्पुरीष्यमङ्गिरुस्वदाभरुग्निम्पुरीष्यमङ्गिरुस्वदच्छेमोग्निम्पुरीष्यमङ्गिरुस्वद्भरिष्यामः॥ १६॥ अन्वुग्निः। अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः। अनु सूर्य

ग्निः"। आग्नेया त्रिष्टुप्। प्रजापतिरूपेणाग्निं स्तूयते। "उषसामग्रम्" अनु योग्निः "अख्यत्"। ख्या प्रकथने। प्रकथितः। उषसामग्रमादित्य योग्निर्दीप्यत इत्यर्थः। इत्य "अ-हान्यनुदीप्यते"। प्रथमः "आद्यः जातवेदाः"। जातप्रज्ञानः। अनुसूर्यस्य पुरुत्रा च रश्मीन्। यश्च सूर्यस्य रश्मीन् अनु 'पुरुत्रा बहुधा दीप्यते। "अनुद्यावापृथिवी आततन्थ"। यश्च द्या-

वापृथिव्यावन्तुरवकीयं रश्मिजालम् आततन्थ आतनोति। वभूथाततन्थे ति छन्दसि निपात्यते। तमग्निं पश्याम इतिशेषः॥ १७॥ अश्वमभिमन्त्रमते (१)। "आगत्यवाजो"। अनुष्टुप्। आगत्य आगम्य वाजो वेजनवानश्वः "अध्वानम्" पन्थानम् "सर्वामृधः" सर्वान्संग्रामान् पाप्मनः शमान् विधूनुते। अपनयति। "तस्मादुहैतदश्वस्य त्वा विधूनुते इति" श्रुतिः।

स्यमुरुत्राचंरन्तमीननुद्यावांपृथिवीऽआततंथ ॥ १७ ॥ आगत्यंव्वाजी। आगत्त्यांव्वाज्यध्वांनंᳬ सर्व्वां मृधोव्विधूनुते ॥ अग्निᳬसुधस्थेमहतिचक्षुषानिचिंकीषते ॥ १८ ॥ आक्रम्यंव्वाजिन्। आक्र

ततो गतश्रमः सन्। "अग्निंसधस्थे"। सहस्थाने पृथिव्याश्रर्त्तमानम्। "महति" उत्कृष्टप्रदेशे प्रवर्त्तमानम् चक्षुषानिचिकीषते" पश्यति। छान्दसोयं धातुः पश्यत्यर्थः ॥ १८ ॥ अश्वेन पिण्डमधिष्ठापयति (१)। "आक्रम्यवाजिन्"। अनुष्टुप्। आक्रम्य। अवष्टभ्य। हे वाजिन्नश्व। "पृथिवीम् अग्नि मिच्छ" अग्नेरन्वेषणां "कुरु"। रुचिर् दीप्तौ। क्विप्।

दीप्त्या सह। यद्वा दीप्त्या निमित्तभूतया न्वेषय "त्वम्"। किञ्च "भूम्याद्वृत्वाय"। वृतु वर्तने। त्वा। त्वा यप्सर्गनार्थे वृत्तिः भूमिः तत्प्रदेशं स्पर्शयित्वा "नः" अस्माकं "ब्रूहि"। कथय। "यतः" यस्मात् प्रदेशात् "खनेम" तं मग्निं "वयम्" ॥ १९ ॥ अश्वं स्तौति पृष्ठस्योपरि पाणिं धारयन्। "द्यौस्तेपृष्ठम्"। वृहती। यस्य तव द्यौः पृष्ठं "पृथिवी च "सध-

स्थंवाजिन्पृथिवीमग्निमिच्छरुचात्त्वम्॥भूम्यांवृत्त्वायनोब्रूहियतःखनेमतंव्वयम् ॥१९॥ द्यौस्ते। पृष्टम्पृथिवीसधस्थमात्मान्तरिक्षःसमुद्रोयोनिः॥ विख्यायचक्षुषात्त्वमभितिष्ठपृतन्यतः॥२०॥ उत्क्राम। महतेसौभगायास्मादास्थानाद्द्रविणोदाव्वाजिन् ॥ व्वय

स्थं" सधस्थानं पादौ। "आत्मान्तरिक्षम्"। "समुद्र" उदकं योनि रुत्पत्तिस्थानम्। तं त्वामेवं प्रभावं ब्रूमः "विख्यायचक्षुषा"। निरीक्ष्य चक्षुषा। "त्वम् अभितिष्ठ" पादैः। "पृतन्यतः"। पृतनां संग्रामं ये कर्तुमिच्छन्ति ते पृतन्यतः तान् पृतन्यतः पुरुषान् ॥ २० ॥ अश्वसुत्क्र-

मयति । "उत्क्राम" । त्रिष्टुप् विराड् वा । उत्क्राम उद्गच्छ । "महतेसौभगाय" महते ऐश्वर्याय ।भगशब्द ऐश्वर्यवचनः । "अस्मादास्थानात् "अस्मादधिष्ठानात् यत्र त्वं तिष्ठसि । द्रविणं धनं ददातीति "द्रविणोदाः" यस्त्वं द्रविणोदाः हे वाजिन् । किञ्च । उत्क्रान्ते त्वयि "वयं स्याम" भवेम । "सुमतौ पृथिव्याः" शोभनायां मतौ पृथिव्याः । "अग्निं ख-

ॐ स्याम सुमतौ पृथिव्या ऽअग्निं खनन्त ऽउपस्थे ऽअस्याः ॥ २१ ॥ उदक्रमीत् । उदक्रमीद् द्रविणोदा वाज्यर्वाकः सुलोकꣳ सुकृतं पृथिव्याम् ॥ ततः खनेम सुप्रतीकमग्निꣳ स्वो रुहाणा ऽअधि नाकमुत्तमम् ॥ २२ ॥

नन्तः" अन्यर्थं पिण्डं खनन्तः । "उपस्थे" उत्संगे "अस्याः" पृथिव्याः ॥ २१ ॥ अथेनमश्वमुत्क्रान्तमभिमन्त्रयते (१) । "उदक्रमीत्" त्रिष्टुप् । यतः प्रदेशादुदक्रमीत् उत्क्रान्तवान् । "द्रविणोदा" द्रविणस्य धनस्य दाता । "वाजी" वेजनवानश्वः । "अर्वा" अरणशीलः चञ्चल इत्यर्थः । "अकः" कृतवान् । "सुलोकं" शोभनं लोकं स्थानम् ।

"सुकृतं पृथिव्याम्। ""ततः" तस्मात्प्रदेशात् "खनेम"। "सुप्रतीकम्"। सुखं प्रतीकम्। सुमुख "मग्निम् स्वोरुहाणाः। स्वर्गं लोकमारोहन्तः। "अधि"। अधीत्य परिभावमैश्वर्यं वा। "नाकम्"। कमिति सुखनाम। न अकमसुखं यत्र गतानां भवति न नाके। लोकः। "उत्तमं सत्कृष्टम्। इत्थंभूतस्य लोकस्य प्राप्तये एतत्कर्म कुर्म इत्यभिप्रायः॥ २२॥ स्रुदम-भिजुहोति (१)। "आत्वाजिघर्मि"। त्रिष्टुभावाग्नेय्यौ। घृ क्षरणदीप्त्योः। आजिघर्मि

# आत्वा। जिघर्म्मिमनसाघृतेनप्प्रतिक्षियन्तम्भुवनानिव्विश्श्वा॥ पृथुन्तिरश्चाव्वयसाबृहन्तंव्व्यचिष्ठ मन्नैरभसन्दृशानम्॥२३॥

आ आसिञ्चामि त्वां "घृतेन"। "मनसा" यज्ञापेक्षायितेन। "प्रतिक्षियन्तं भुवनानिविश्वा"। प्रत्येकशो निवसन्तं भुतानि सर्वाणि। "पृथुं" तिरश्चा। महान्तं तिर्यगञ्चनेन ज्योतिषा। "वयसा" बृहन्तम् "वयसा धूमेन" बृहन्तम्। "इतो वा अयमूर्द्ध्वं रेतः सिञ्चति धूमस् सामुत्र वृष्टिर्भवती" त्येतदभिप्रायम्। "व्यचिष्ठम्"। व्यञ्चनवन्तम् अवकाशवन्तम्। "अन्नै र-भसम्। रभ राभस्ये। अन्नैर्घृतादिभिः क्षिप्रं कृत्वा हवन्तम्। बहुभिरप्यन्नैः क्षिप्रं नोस्य

शक्तिपरिहाणं भवतीत्येतदभिप्रायः। दृशानम्। दर्शनीयं दृश्यमानं वा। अदृष्टा अन्या देवता अयं तु दृश्यइति ॥ २३ ॥ "आविश्वतः"। "आजिघर्मि" असिञ्चामि त्वां "विश्वतः" प्रत्यञ्चम् सर्वतः पतिगतं महाभाग्येन। यतः (१)। "अरक्षसामनसातज्जुषेत"। अक्रुध्यमानेन प्रसन्नेन मनसा तद्धविर्जुषस्व भक्षयस्व। यस्त्वं "मर्य्यश्रीः"। मर्य्ये मनुष्ये

विश्वतः। प्रत्यञ्चञ्जिघर्म्यरक्षसामनसातज्जुषेत ॥ मर्य्यश्रीस्पृहयद्वर्णोऽअग्निर्नाभिमृशेतन्वाजर्भुराणः ॥ २४ ॥ परिवाजपतिः। परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशु

राध्ययणीयः। "स्पृहयद्वर्णः" स्पृहणीयवर्णश्च। "अग्नि" रिति साभिप्रायम्। "अग्निर्वै देवानां। म्दृद्धृदयतम" इत्यादिगुणख्यापनार्थम्। "नाभिमृशेतन्वाजर्भुराणः"। नचाभिमर्शनाय भवति तन्वा शरीरेण ज्वालालक्षणेन। "जर्भुराणः"। जभजृभी गात्रविनामे। इतश्चेतश्च गच्छन् ॥ २४ ॥ परिलिखति। तिसृभिराग्नेयीभिर्गायत्र्यनुष्टुब्जगतीभिः। "परि-

वाजपतिः" । अग्निः नानादेवत्यान्यपि हव्यानिहवींषि परिअक्रमीत्। परिक्रमणं भक्षणार्थम । "वाजपतिः" अन्नस्य पतिः। "कविः" क्रान्तदर्शनः। किकुर्वन्हवींष्य "क्रमीत"। दधत् ददत्रत्नानि रमणीयानि धनानि "दाशुषे" हवींषि दत्तवते यजमानाय ॥ २५ ॥ "परित्वाग्ने"। परोत्यस्योपसर्गस्य धीमहीत्यनेन संबन्धः। ध्यायतिरयम संप्रसारणं तु छान्दसम्। परि सर्वतो ध्यायामः। "त्वा" त्वाम् हे "अग्ने पुर" पुररूपेणावस्थितम। अग्निः

र्वे ॥ २५ ॥ परिंत्वाग्नेपुरंव्वयंव्विप्रंᳬसहस्यधीमहि ॥ धृषद्वर्णन्दिवेदिवेहुन्तारम्भङ्गुरावंताम् ॥ २६ ॥ त्वमंग्ग्ने । द्युभिस्त्वमांशुशुक्ष

सहसो हि पुरोरक्षको भवति। "वयं विप्र" मेधाविनं ब्राह्मणजातिं वा। हे "सहस्य"। सहसिबले भवः सहस्योग्निः। स हि मथ्यमानो जायते। तस्यसंबोधनं हेसहस्य। "धृषद्वर्ण" प्रसहनरूपम "दिवेदिवे" अहन्यहनि। "हन्तारं" बाधितारम् "भंगुरावताम"। भङ्गुरमनवस्थितं मनोयेषां ते भङ्गुरावन्तः तेषां भङ्गुरावताम्। अनवस्थितचित्तवृत्तीनामित्यर्थः॥२६॥

"त्वमग्ने" हे भगवन्नग्ने त्वं "द्युभि" रहोभिर्निमित्तभूतैर्मथ्यमानो जायसे । त्वमेव "आशुशुक्षणिः"। आशु शीघ्रं शुचा दीप्त्या क्षिणोति हिनस्ति सनोति संभजते वा आशुशुक्षणि रुच्यते। त्व "मद्भ्य" श्च विद्युदात्मना जायसे। "त्वमश्मनः" दोषाणात्परिजायसे। "त्वंवनेभ्यः" अरणिकाष्ठेभ्यो जायसे। "त्वमोषधीभ्यो" वंशादिभ्यो जायसे। "त्वं-नृणां" मनुष्याणामग्निहोत्रिणां जायसे। तदुक्तम्। "पुत्रो ह्येष सन् स पुनः। पिता

ग्निस्त्वमद्भ्यस्त्वमश्मनस्परि ॥ त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वन्नृणा न्नृपतेजायसेशुचिः ॥ २७ ॥ [ १६ ] देवस्यत्वा । सवितुःप्रसवे

भवतीति"। हे "नृपते" नृणां पालयितः। "शुचि" र्निष्पापः। अथापरो व्याख्यामार्गः। आशुशुक्षणिशब्दस्य पञ्चमार्थे प्रथमा। तथाच वाक्यस्य संयोगः। आङुपसर्गपूर्वः शोचतिः सन्नन्तः। आशुशुक्षणेः आदिदीपयिषोर्जायसे। योपि गृहं खलं वा निर्मथ्य दीपयति तस्यापि त्वं जायसे। सर्वेषामनुग्रहे प्रवृत्तो हि त्वमित्यभिप्रायः। त्वमग्ने-द्युभिर्जायसे त्वमादिदीपयिषोर्जायसे। एवं त्वमद्भ्यः अश्मनः वनेभ्यः ओषधीभ्यः नृणां-

पुत्रत्वेन नृपते जायसे। शुचिर्दीप्त इति योजना ॥ २७ ॥ (१) खनति। देवास्त्वा"। व्याख्यातम्। * "पृथिव्याः सहस्थानात् अग्निं" पशव्यम् अङ्गिरसा तुल्यं खनामि। "ज्योतिष्मन्तं" ज्योतिषा संयुक्तं त्वांहि अग्ने "सुप्रतीकं" सुमुखम् "अजस्रेण" अनुपक्षीणेन

ष्विखनोर्व्वाहुब्भ्यांम्पूष्णोहस्ताब्भ्याम् ॥ पृथिव्याःसुधस्थादग्निम्पुरीष्यमङ्गिरस्वत्खनामि ॥ ज्योतिष्मन्तन्त्वाग्नेसुप्प्रतीकमजस्रेणभानुनादीद्यतम् ॥ शिवम्प्रजाब्भ्योहिंसन्तम्पृथिव्याःसुधस्थादग्निम्पुरीष्यमङ्गिरस्वत्खनामः ॥ २८ ॥ अपाम्पृष्ठम्। अ

"भानुना" दीप्त्या "दीद्यतं" दीप्यमानम् "शिवं" "प्रजाभ्यः" शान्तं प्रजाभ्यः "अहिंसन्तं" प्राणिनः † पृथिव्याः सहस्थानादपि। अग्निं पशव्यम् अङ्गिरसा तुल्यं खनामः ॥ २८ ॥

(१) अभ्र्यापिण्डं खनतिदेवस्त्वेति। १६। २। २६। अस्यार्थः अभ्र्याहत्वापिण्डं परितः खनतिकण्डिकया।

* पृथिव्या मृत्पीण्ड्यां मन्त्रेष्टकर। † पृथिव्यादिपुनर्वाक्यादार्थः।

पुष्करपर्णं कृष्णाजिनोपरिष्टात्स्थापयति। (१) "अपाम्पृष्ठम्"। स्वराट् पंक्तिः। यतः अपाम्पृष्ठमसि उदकस्थानात्। योनिः स्थानं च अग्नेः अन्यथंस्य पिराडस्य। अतस्त्वां ब्रवीमि। "समुद्रमभितः पिन्वमानम्"। उपपदविभक्ति द्वितीया। समुद्रस्योदकस्य इतश्चेतश्च सिञ्चतः। त्वं "वर्द्धमानो महान्" भव। "आचपुष्करे"। आसीद च पुष्करे उदके। स हि तस्य

पाम्पृष्ठमसि योनिरग्ने समुद्रमभितः पिन्वमानम्॥ वर्द्धमानो महाँ२॥ऽआचपुष्करे दिवोमात्रयावरिम्णाप्रथस्व॥२९॥ शर्म्म च।

योनिः। आकारः आक्रम्य व्याख्यातः। चकारो भिन्नक्रमः। विमार्ष्टि एनं चतुर्थेन पादेन। (२) "दिवो मात्रया" द्युलोकस्य परिमाणेन। "वरिम्णा" उरुत्वेन च "प्रथस्व" वर्द्धस्व॥ २९॥ (३) उभे कृष्णाजिनपुष्करपर्णे अभिमृशति अनुष्टुब्व्याम्। "शर्म च स्थः"।

(१) का० कृष्णाजिनमास्तीर्यापरतस्तस्मिन् पुष्करपर्णं मपाम्पृष्ठमिति। १८। २। २४। अस्यार्थः मृत्पिण्डोत्तरभागेमाग्नीव सुत्तर लोमकृष्ण जिन मास्तीर्यत्तत्रापाम्पृष्ठमितिपादत्रयात्मकमंत्रेण कमलिनोपत्रमास्तृणोति।

(२) का० विमार्ष्टि नहिवर्द्धति। १८। २। २५। एतत्पुष्कर पर्णं विपुलकरोति।

(३) का० मालभतउभेशर्मचस्थइति। २८। २६। ऋग्द्वयेन कृष्णाजिनपुष्करपर्णे सहैवस्पृशेत्।

यो युवां शरणं च भवथ संहननं च। "अच्छिद्रे" सकले "बहुले" महाप्राणे च। उभे अपि ते युवां ब्रवीमि। "व्यचस्वती" अवकाशवती भूत्वा "संवसाथाम्" * आच्छादयं तम्। आच्छाद्य च "भृतं" विभृतम् "अग्निंपुरीष्यं" पशव्यम् ॥ ३० ॥ "संवसाथाम्"। आच्छादयतमेनमग्निं पिण्डरूपम्। "स्वर्विदा"। यच्चसूर्यदेवाहवचनः स्वशब्दः। स्वर्वेत्तीतिस्वर्वित्

शर्म्मं चस्त्थो वर्म्मं चस्त्थोच्छिद्रे बहुलेऽउभे ॥ व्यचस्वतीसंव्वसाथा भृतमुग्निम्पुरीष्यम् ॥ ३० ॥ संव्वसाथाम्। संव्वसाथां स्वर्व्विदा समीचीऽउरसात्त्मना ॥ अग्निमन्तर्भरिष्यन्तीज्योतिष्मन्तम

स्वर्विदारूपेण। यद्वा। द्विवचनस्यस्थानेआकारः। स्वर्विदौभूत्वा। यद्वास्वर्गविदौभूत्वा। "समीची" समाने संगते एकचित्ते भूत्वा। "उरसा त्मना" च। किञ्चअग्निपिण्ड "मन्त" र्मध्यतः "भरिष्यन्ती" धारयमाणे ज्योतिष्मन्तम् अजस्रम्" अनुपक्षीणम्। कुरुतमिति शेषः।

---

* वसथाच्छादयेत्यर्थादि।

"इदि" ति पादपूरणः ॥ ३१ ॥ (१) पिण्डमभिमृशति । * "पुरीष्योसि"। पशव्यस्त्वमसि। "विश्वभराः" सर्वस्य धारकः पोषको वा "अथर्वात्वा" चप्राणः। त्वां "प्रथमोनिरमन्थत्" मथितवान् हे "अग्ने"। पिण्डं हरति पञ्चिराग्नेयीभिः। तत्र तिस्रो गायत्र्यः। द्वे त्रिष्टुभौ एका बृहती। "त्वामग्ने"। त्वां हे अग्ने "पुष्कराद् उदकात् "अधि" सकाशात् "अथर्वा"

जंसुमित् ॥ ३१ ॥ पुरीष्यो॑ऽसि । वि॒श्वभ॑राऽअथ॑र्वा त्वा प्रथ॒मो नि

रमन्थदग्ने । त्वाम॑ग्ने॒ पुष्क॑रा॒दध्यथ॑र्वा॒ निर॑मन्थत ॥ मू॒र्ध्नो विश्व॑

स्य वा॒घत॑ः ॥ ३२ ॥ तमु॑ त्वा । द॒ध्यङ्ङृषि॑ः पु॒त्रऽई॑धे॒ऽअथ॑र्वणः ॥ वृ॒

अतनवान् प्राणो निरमन्थत। निर्जनितवान्। "आपो वै पुष्करं प्राणोथर्वा" इति। श्रुतिः। "मूर्ध्नोविश्वस्यवाघतः"। वाघत इति ऋत्विङ्नामसु पठितम्। वाघतस्तु मूर्ध्नः शिरस्तः अरण्योर्जनयति। सर्वस्य कर्मणोङ्गभूतम् ॥ ३२ ॥ "तमुत्वा"। अत्राप्युकार एतस्मिन्नर्थे।

(१) का पिण्डपुरीष्योसीति। २५।२।२०। * प्रतिष्ठागायत्री अष्टौसप्त पञ्चेतिमयित्रेतिपिगलोक्तिः।

उत्तरेण त्वकारः। तमेव त्वां "दध्यङ्" नाम "ऋषि" मन्त्राणांद्रष्टा। "पुत्र ईधे अथर्वणः"। व्यवहितोविसंबन्धः। अथर्वणः पुत्र ईधे। इन्धीदीप्तौ। आदीपयति। कथंभूतं त्वामादीपयति। "वृत्रहणम्" पाप्मनो हन्तारम् "पुरन्दरम्" असुरपुरां च दारयितारम्। वाग्नै दध्यङ् आथर्वण इति श्रुतिः ॥ ३३ ॥ "तमुत्वा"। तमेव त्वां "पाथ्यो वृषा"। "मनो

त्वृहणंपुरन्दरम् ॥ ३३ ॥ तमुंत्वा। पाथ्योव्वृषासमीधेदस्युहन्तमम् ॥ धनञ्जयरणेरणे ॥ ३४ ॥ सीदहोतः। सोदहोतस्वउलोके चिकित्वान्सादयायज्ञसुंकृतस्ययोनौ ॥ देवावीदेवान्हविषायजा

वै पाथ्यो वृषा" तिश्रुतिः। मनसा हि मुक्तः पन्था उपलभ्यते। तदुक्तम् मनसैवानुद्रष्टव्यमिति। मनसा अभिलष्य स्त्रियां रेतः सिञ्चति इति। वृषा मनः "समीधे" संदीपयति।* "दस्युहन्तमम्" शत्रुहन्तृतमम्, धनञ्जेतारम्, "रणे रणे"। संग्रामेसंग्रामे ॥ ३४ ॥

दस्युनद्दीतिदस्युशो भतिशयेनदस्युहादस्युहन्तमम् नलोपेदस्युहनम इतिमाये नाडसी नितमपीगुडागमेरूपम्।

य० य० स० २३५ उ० भा०

"सीदहोतः"। सीद उपविश हे होतः। अग्ने। "स्वउलोके"। उकारो विनिश्चयार्थीयः। स्वकीय एव लोके कृष्णाजिने। चिकित्वान् चेतनवान् परिदृष्टकारो स्वमभीकारं जानानः। किञ्च। "सादयायज्ञम्"। स्थापय च यज्ञं त्वं "सुकृतस्य" साधुकृतस्य कर्मणः। "योनौ" स्थाने कृष्णाजिने। "कृष्णाजिनं वै सुकृतयोनि" रितिश्रुतिः। यज्ञो हि तन्य-

## स्यग्नेबृहद्यजंमानेव्वयोधाः ॥ ३५ ॥ निहोता। होतृषदनेव्विदानस्त्वेषोदीदिवाँ२॥ ऽअसदत्सुदक्षः॥ अदब्धव्रतप्रमतिर्व्वसिष्ठः

माने अवधातः प्रेषण सोमनिधा च कृष्णाजिने एवं भवतीत्येतदभिप्रायमेवमुच्यते। यद्यत्त्वं "देवावी" देवानामवनशीलः तर्पणशीलः "देवान्हविषा" यजासि यजसि तं त्वां पुनः प्रार्थयामि। हे "अग्ने बृहत्" महत् "यजमाने वयः" आयुरन्नं वा। *"धाः" धेहि ॥ ३५ ॥ † "निहोता" नीत्ययमुपसर्गं असददित्यनेनाख्याते वसंबध्यते। न्यसदत् निषस्त उपविष्टः हो-

* दधातेर्मुङि मध्यमैकवचने धधाति माङि बहुलं छन्दस्यमाङ्योगेऽपीत्यडभाव।

† पावकेयी त्रिष्टुप् देवश्रवा देववाताश्चर्षी।

ताग्निं। "होतृषदने"। होता यस्मिन्सीदति तत् होतृषदनं तस्मिन्। "विद्वान्" जानानः स्वमधिकारम्। "त्वेषो" दीप्तियुक्तः "दीदिवान्" देदीप्यमानः। "असदत्। सुदक्षः" साधु चिप्रकारी। "अदब्धव्रतप्रमतिः"। अदब्धमनुपहिंसितं कर्म यस्य प्रकृष्टा मतिः सएवमुच्यते। "वसिष्ठः" वस्तृतमः। यस्य सहस्रम्भरः। सहस्रं बिभर्तीति सहस्रंभरः सर्वं-हितः। "शुचिजिह्वः"। शुचिर्जिह्वो यस्य स शुचिजिह्वः योयं नानादेवत्यानि हवींषि

सहस्रम्भरःशुचिजिह्वोऽअग्निः ॥ ३६ ॥ सᳬसीदस्वमहाँ२ऽअसि शोचस्वदेववीतमः ॥ विधूममग्नेऽअरुषम्मियेद्ध्यसृजप्रशस्तदर्शत

अभ्यवहरति, नचोच्छेषयति सशुचिजिह्व इति शक्यते वदितुम्। अग्निरितिविस्मित इवाचष्टे ॥ ३६ ॥ संसीदस्व (१)। हे "अग्ने" संगत्य सीदस्व। यतः त्वं "महानसि"। "शोचस्व" दीप्यस्व यतस्त्वं "देववीतमः"। अतिशयेन देवानामाप्यायिता। "विसृज" च विसृज्य चवि "धूमम् अरुषम्" अरोचनम् "मियेध्य"। यमेध्य इति प्राप्ते छान्दसो प्रकर्षः।

हे "प्रशस्त" अश्व। "दर्शतम्" दर्शनीयमाकृतिपरिणामभूतम्। "इतो वा अयमूर्ध्व-रेतः। सिञ्चति धूमं सामुत्र वृष्टिर्भवतो" ति श्रुतिः॥ ३७॥ अवाटे अपश्चारिञ्चति। "अपोदेवीः" (१) अब्देवत्या बृहती। विधूममग्नेअरुषंमियेध्येत्यग्रनन्तर्यादग्निरुच्यते। यौवी "अपो देवीरुपसृज निक्षिप वृष्टिरूपाः" मधुमती रसवतीः आरोग्यदात्रिकाः। "अयक्ष्माय"

म्॥ ३७॥ [ १० ] अपोदेवीः। अपोदेवीरुपंसृजमधुमतीरयक्ष्माय प्रजाभ्यः॥ तासामास्थानादुज्जिहतामोषधयःसुपिप्पलाः ॥३८॥ सन्ते। वायुर्मातरिश्वादधातूत्तानायाहृदयंयद्विकस्तम्॥ योदे

प्रजाभ्यः। यक्ष्मा व्याधिः भावप्रत्ययलोपः। अयक्ष्मत्वार्थम् प्रजानामिति विभक्तिव्यत्ययः। "तासां" भूमिगतानाम् "अस्थानात्" अधिष्ठानात्। "उज्जिहताम्" उद्गच्छन्तु। "ओषधयः" सुपिप्पलाः साधुफलाः पिप्पलं फलमुच्यते॥ ३८॥ वायुना संदधाति। "संतेवायुः"। त्रिष्टुप्। अर्धर्चः या पार्थिवोर्धर्चो वायदेवत्याः। "सन्दधातु" तव "मातरिश्वा" वायुः पृथिवी।

• उत्तानायाः "सत्त्रा यदेतत् हृदय" मनटरूपेण । † "विकस्तम्" विकाशितम् । वायुरुच्यते । "योदेवानाम्" यस्त्वं देवानां चरसि "प्राणथेन" प्राणत्वेन थकारोभावप्रत्ययार्थकः । हे "देव" तस्मै "कस्मै" प्रजापतये "तुभ्यम्" इयं पृथिवी वषडस्तु वषट्कृता भवतु । "योदेवानाञ्चरसिप्राणथेनकस्मैदेवव्वषडस्तुतुभ्यम् ॥२८॥ सुजातोज्ज्योतिषा । सहशर्म्मवरूथमासदत्स्वः ॥ व्वासोऽअग्नेव्विश्वरूपꣳसं

व्यन्याऽङ्तिरतिरस्तियथैप" तिश्रुतिः ॥ २८ ॥ आस्तीर्णयोरन्तरानुद्रत्याति (१) । ‡ "सुजातोज्योतिषा" । अनुष्टुवाग्नेयी । अयमग्निः सुजातः सुजन्मा ज्योतिषा सह संयुक्तः । "शर्म" शरणम् "वरूथं" वरणीयम् गृहम् "आअसदत्" आसीदतु । "स्वः" स्वर्गाख्यम् । योक्त्रेणोपन-

(१) का० भास्तीर्णयोरन्तानुद्रत्यातिसुजात इति १६ । २ । ५ । अस्यार्थं । आस्तीर्णयोः कृष्णाजिनपुष्करपर्णयो प्रान्तानुदसादत्तर्हति ।

---

* ऊर्ध्वमुखेनावस्थिताया ।

† इडभार आर्ष ।

‡ षष्ठिदेवत्याष्टम् द्वितीयोन आर्ष ।

च्छति। (१) "वासोऽग्ने"। हे अग्ने विभावसो विभूतधन। वासो विभूतयः। "विश्वरूपं" विचित्रम् "संव्ययस्व"। व्येञ् संवरणे परिधत्स्व ॥ ४० ॥ अथैनमादायोत्तिष्ठति (२)। * उदु-तिष्ठ। "आग्नेयी" बृहती। उत्तिष्ठ। उकारः पादपूरणः। हे स्वध्वर सुयज्ञिय। तत उत्थाय † अस्मान्पालय "नो" अस्मान्। "देव्याधिया" देव्या बुद्ध्या। किञ्च। "दृशेच" दर्शना-

व्ययस्वविभावसो ॥ ४० ॥ उदुतिष्ठ। स्वध्वरावानोदेव्याधिया ॥ दृशेचभासाबृहतासुशुक्वनिराग्नेयाहिसुशस्तिभिः ॥ ४१ ॥ उदुड

य अस्माकम् "भासा बृहता सुशुक्वनिः" साधु सुशचा संदीप्तः। "आयाहि" आगच्छ

(१) का० विहृतामुञ्जयोक्रेणोपनह्यति वासोऽग्नइति। १६। २। ६। उद्गृहीतान्कृष्णाजिनपुष्करपर्णयोरन्तान्मुञ्जयो-क्त्रेण बध्नात्युत्तरार्धेनेतिसूत्रार्थः।

(२) का० उत्तिष्ठतिपिण्डमादायोदुतिष्ठेति। १६। ३। ७। तंपिण्डं गृहीत्वोत्तिष्ठेदितिसूत्रार्थः।

* चरिदेवत्यायथाक्रमोविज्ञमोद्वानतीपीवादगत्यं पर्यपरार्था।

† पद। पर्योत्तिष्ठ, दर्शनदिनार्थादौ।

हे "अग्ने मयस्तिभिः" । साधुशिष्ठैरश्वैः ॥ ४१ ॥ (१)अथैनमितऊर्द्ध्वं प्राञ्चं गृह्णाति । *"ऊर्द्ध्व-ऊषुण" बृहती आग्नेयी । ऊर्द्ध्वस्तिष्ठ । ऊसू पादपूरणो । "नः ऊतये" । अस्माकमवनाय । कथमूर्द्ध्वस्तिष्ठ । "देवो न सविता" । नकार उपमार्थीयः । देव इव सविताः ऊर्द्ध्व-

ऊषुणऽऊतयेतिष्ठादेवोनसविता ॥ ऊर्द्ध्वोव्वाजस्यसनितायदञ्जिभिर्व्वाघद्भिर्व्विह्वयामहे ॥ ४२ ॥ सजातः । सजातोगर्भोऽअसिरो

स्थितः "वाजस्य" अन्नस्य "सविता" संभक्ता । भविष्यसीतिशेषः । "यदञ्जिभिः" । यस्मादञ्जिभिर्व्यञ्जकैर्व्याणां रश्मिभिः । "वाघद्भिः" । हविषां वोढृभिः सहितम् "विह्वयामहे" विविधमाह्वयामः तदूर्द्ध्वस्तिष्ठेति संबन्धः ॥ ४२ ॥ (२) अश्वमभिमन्त्रयते । "सजातोगर्भः" ।

(१) का० ऊर्द्ध्वबाहुं प्राञ्चमस्त्रात्पूर्वं ऊषुणइति । १६ । ३ । ८ । प्रसारितबाहुं प्राञ्चपिण्डं गृह्णाति ।

(२) मत्रञ्चोपरिनाभिधारयत्र खप्रभृतोनभिमन्त्रयतेसजातस्थिरोभवशिवोभवेति । १६ । २ । ३ । पिण्डं नीचैरव त्तायंनाभ्युपरिष्टस्ताभ्याधारयत्र खगर्दभाजानूसजातइत्यादितूक्रमेण प्रतिमवमन्त्रयते एकैकपश्यन्नैकैकमन्त्र जपतीति सूत्रार्थं ।

* षष्ठिदेवत्वीपरिशाद् एतोकाक्षराणष्टुभं पादोशांदमर्वोऽन्ये वमोटाणां सोपरिष्टादृहती ।

त्रिष्टुप् अग्निऋच्याश्वं स्तौति । अध्याहारव्यवहितपदप्रायो मन्त्रः । यस्त्वं । "रोदसो" द्यावापृथिव्यो "गर्भो * जाता" सि । यश्चत्वं हे "अग्ने चारुः" शोभनः "विभृतः" ह्रग्रहोर्भश्छन्दसि इत्येति हकारस्य भकारः । "ओषधीषु" पुरोडाशादिलक्षणासु दातव्यविषयासु भवसि ।

गर्भो जातः रोदसी । दंस्योरग्ने चारुर्व्विभृतऽओषधीषु ॥ चित्रः शिशुः परितमांऽस्यक्तून्प्र मातृभ्योऽअधिकनिक्रदद्गाः ॥ ४२ ॥ स्थिरोभव । वीड्वङ्गऽआशुर्भ

यश्च त्वं "चित्रो" नानारूपः "शिशु" शंसनीयः । "परितमांसिअक्तून्" रात्रीः अतिरोचसे । स त्वं "मातृभ्यः अधि" । ओषधिवनस्पतिभ्यः सकाशात् ‡ "कनिक्रदत्" अत्यर्थं शब्दं कुर्वन् "गाः" प्रयाहि ॥ ४२ ॥ रासभमभिमन्त्रयते । "स्थिरोभव" । उष्णिक्‌अनुष्टुब्वा । स्थिरो भव निश्चलोभव । "वीड्वङ्ग" दृढाङ्गश्च भव । "आशुः" शीघ्रश्च भवं "वाजी" वेजनवांश्च भव ।

* जातोऽसि ।

‡ ... ... निपातितम् ।

हे "अर्वन्"। पदार्थं प्रति इयर्त्तीति अर्वा। "पृथुः" इथुश्च "भव"। "सुषदः"। स्वस्थे-यश्च भव। यत "त्वमग्ने: पुरीषवाहणः"। पुरीषं पशव्यं यवसं वहतीति पुरीषवा-हणो रासभः॥ ४४ ॥ अजमभिमन्त्रयते। "शिवो भव"। अनुष्टुप् बृहती वा। हे अज शिवः शान्तो भव। "प्रजाभ्यो मानुषीभ्यो" र्थाय त्वम् हे "अङ्गिरः"। "अङ्गिरा वा अ-

वर्व्वाजव्यर्व्वन्॥ पृथुर्भवसुषदस्त्वमग्नेः पुरीषवाहणः॥ ४४ ॥
शिवोभव। प्रजाभ्योमानुषीभ्यस्त्वमङ्गिरः॥ माद्यावापृथिवीऽअ
भिशोचीर्मान्तरिक्षम्माव्वनस्पतीन्॥ ४५ ॥ प्रैतु। व्वाजीकनिक्र

ग्निराग्नेयोज" इतिश्रुतिः। मा च त्वं "द्यावापृथिवी अभिशोचीः" अभिसंतापयेः। "मान्त-रिक्षं मा च वनस्पतीन्॥ ४५॥ (१) एतेषां पशूनामुपरिष्टात्प्रगृह्णाति। * "प्रैतुवाजी"।

(१) का० धारयन्येषामुपरिपिण्डमनुयुगम प्रैतुव्वाज इयाग्निमिताश्वखरयोरिति।१६।१०। अश्वादीनामुपरिपिण्डधारयतितान्पृ श्नन्प्रैतुव्वाजीत्यश्वोपरिरूपाग्निमिति खरोपरीतिसूत्रार्थ।

* महापङ्क्तिरष्टावसानापञ्चाक्षरपादामहापङ्क्ति आद्यावर्षोवदेवस्यौषतीयोपर्षोरासभदेवत्य तृतीयतुर्योपादोव्यूयो।

व्यवसाना महापंक्तिः। अर्द्धचोत्रश्वदेवत्तो। प्रकर्पेण एतु आगच्छतु वाजी अश्वः। "कनिक्रदत्" अत्यर्थं हेषितशब्दं कुर्वन् अयं च रासभोश्वयवसवाहनार्थं प्रकर्षेण एवागच्छतु। "नानदत्"। सोपहासमुच्यते। गर्दभरटितेन सर्वादिशो नादयन्। "रासभ." पत्वा। पतनशीलः। "यदश्वस्य यजुषि रासभं निराहतद्रासभे शुचन्दधतीति" श्रुतिः। "भरन्नग्निं पु-

दुन्नानंदुह्नासंभुऽपत्वां॥ भरंन्नुग्निम्पुरीष्युम्मापाद्यायुंषऽपुरा॥ वृ
पाग्निस्वृषंणम्भरंन्नुपाङ्गभंऽसमुद्रियंम्॥ अग्नुऽआयांहिव्वीत

रीष्यम्"। अयं चाश्वो भरन्धारयन् अग्निम् पुरीष्यं पशव्यम् "मापदि" मा विनश्यतु। "आयुषः पुरा"। आयुश्शब्देन युत्ताव कर्माभिहितम्। यज्ञसंयोगे न हि अश्वादीनां स्तुतिः। "आयुषः पुरा"। आसमाप्तेः कर्मणः। रासभ उच्यते। "वृषा" सेक्ता। "अग्निं वृषणं" सेक्तारम्। आकृतिपरिणामभिप्रेत्तोक्तम्। भरन्धारयन्। "अपांगर्भम्" अपां मध्ये वस्थानागर्भं उच्यते। "समुद्रियम" त्रयो ह वै समुद्रा अग्निर्यजुषां महाव्रतम् साम्नां महदुक्थऋ-

चामि त्येतदभिप्रायम् तत्र मन्त्र: समुद्रिय:। खदाराहरति। (१) "अग्ने आयाहि"। एकपदा-ग्नेयो गायत्री। हे अग्ने आगच्छ "वीतये" हविरुपभोगाय ॥ ४६ ॥ छागस्योपरिधारन-जपति। ऋतं सत्यम् ऋतमग्निः सत्यमादित्यः। यदि वा आदित्य ऋतम् अग्निः सत्यम्

यें ॥ ४६ ॥ ऋतꣳसत्यमृतꣳसत्यमग्निम्पुरीष्यमङ्गिरस्वद्भरामः ॥ ओषधयः प्रतिमोदध्वमग्निमेतꣳशिवमायन्तमभ्यत्रयुष्माः ॥ व्यस्यन्विश्वाऽअनिराऽअमीवानिषीदन्नोऽअपदुर्म्मतिञ्जहि ॥ ४७ ॥

उभय रूप मप्याहरामीतिशेषः। अनड्वापुरुषमीक्षते (२) अग्निं पुरीष्यम् व्याख्यातम् उपावह-

(१) का० अग्नआयाहीत्याहवनीयाच्छाग स्यासमस्य त्यभित्यानिधानात्। ५। २। १। अग्नदलिमत्रेणवासभात् पिण्डमाद त्वरत मतामितिमेत्रेणाज्यस्योपरिनिधानपर्यन्तमिति मितिसूत्रार्थं।

(२) का० अनड्वापुरुषमीक्षनेपूर्ववदग्निपुरीष्यमिति। १६। २। १२। देवपितृकार्यविमुखोऽनड्वानभिव्यपुरीषति अग्निपुञ्ज्वलनस्याहवनीयान्तेस्थित इति पूर्वपदेनलक्ष्यतइति सूत्रार्थं।

रति। (१) ओषधयः प्रति। द्वाभ्यां त्रिष्टुबनुष्टुब्भ्यां सोषधिदेवताभ्यातम्। द्वितीयोऽर्द्धर्च आग्नेयः। हे ओषधयः प्रति मोदध्वम् प्रतिहर्षयत। मध्युत्थानादिभिः। अग्निम् एतं शिवं शान्तम् आयन्त सभरन्त युक्ष्माः। युष्मान् आगच्छन्तम् अलं वस्थितानाम् एव मह्वं चैनोषधी दत्त्वा अथेदानो मग्निं माह। त्वमपि व्यस्यन् विध्यन् विश्वाः सर्वाः। * अनिराः। इवरे-

# ओषधयः प्रति। ओषधयः प्रतिगृभ्णीत पुष्पवतीः सुपिप्पलाः॥

त्यन्ननामचभति। अन्नं याभिः सतीभि रष्टतिनिदाघाशनिभि गृह्यते विध्यन् "अमीवा" व्याधीन् निपीदन् निविशमानश्च। नो अपदुर्मतिं जहि। नोऽस्माकम् "अपजहि" अपनय दुर्मतिम् दुर्बुद्धिं नास्तिदत्तं नास्तिकृतमित्येवमादिकाम् ॥४७॥ ओषधयः। हे ओषधयः एत मग्नं गृह्णती। आदरवत्यः सत्यः। "पुष्पवतीः सुपिप्पलाः" । पुष्पवत्यः शोभनफला स्म भूत्वा। अयं हि वो

(१) का० उत्तरत आहवनीयस्योद्धतावोक्षितेसिकतोपकीर्णे परिस्रितप्राक्द्वारे पिष्ट निदधात्यो ऽपधयइति। १२। २। १४। उदग्रामभरणार्थं मृत्तयाहवनीतस्योत्तरपूर्वमेवकृतपरिश्रित आच्छादित प्रदेशे ओषधयइति मन्त्राभ्यांपिष्ट स्थापयति। कोदग्येपरिश्रुते हतो ऽग्नेखने यथोचिते सिकताफदिशिवारेपश्यताभेदृसिकताव्याप्तेएताहृमेदतिसूत्रार्थः।

* मालिदरायक यायिकायनिपद दरैतायनाम।

युष्माकम् गर्भं ऋत्त्वियः ऋतव्यः प्राप्तकालः प्रत्नं पुराणं शाश्वतिकम् सधस्थं सहस्थान मासीदति ॥ ४८ ॥ अथैनं विप्यति (१)। विपाजसा। वीत्यय सुपर्णौ बाधस्वे त्यनेन संबध्यते। विशाधस्व। पाजसा। पाजइतिबल नाम। बलेन। पृथुना विस्तीर्णेन। शोशुचानो दीप्यमानः। द्विषः द्वेष्यात्। रक्षसः। अमीवाः व्याधीन्। एवं प्रत्यक्षं याचित्वा अथे

अयंव्वो गर्ब्भऽऋत्त्वियः प्प्रत्क्त्ँसधस्त्थमासदत् ॥ ४८ ॥ व्विपाजसा। पृथुनाशोशुचानोबाधस्वद्विषोरक्षसोऽअमीवाः ॥ सुशर्म्मणोबृहतःशर्म्मणिस्यामग्नेरहँसुहवस्यप्प्रणीतौ ॥ ४९ ॥ [ १२ ] आपो

दानीं परोक्षं कृत्वा शिष माशास्ते। "सुशर्मणः" माधुशरणस्य बृहतो महतः। शर्मणि शरणे। स्याम् भवेयम् अग्नेः अहं सुहवस्य। स्वाह्वानस्य। प्रणीतौ प्रणयने अभयनु-

(१) का० विपाजसेतिप्रमुच्येन मजलोमान्यादायप्रागुदीचः पशुनुत्सृजति। २६। २। १५। विपाजसेति मंत्रेणैनपिण्ड स्थानिन मत्र विसं स्वकागरोमाणि गृहीत्वा प्रादीनैशानीं दिशं प्रयुत्सृजतीतिसूत्रार्थः।

ज्ञायाम् ॥ ४९ ॥ अपउपस्पृशति (१)। आ पोहि। अब्दैवत्या स्तिस्रो गायत्र्यः। * आपो हि छामयो भुवः। द्वितीये पादे तच्छन्दस्यवर्णा द्वद्राध्याहारः कर्त्तव्यः। हे आपः या यूयं † मयो भुवः। मय इति सुख नाम सुखेन भावयित्र्यः स्थ भवथ सर्वप्राणिनाम्। छन्दः परि पूर्ति करो हि शब्दः। ता नः अस्मान् ऊर्जे अन्नाय ‡ दधात न स्थापयत। यथा वयं सर्व

## हि। ष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ मुहेरणायुचक्षसे ॥ ५० ॥

स्य भोग्यस्य भोक्तारो भवेम तथा कुरु ते त्यभिप्रायः। § महते चरणाय रमणीयाय चक्षसे दर्शनाय। अस्मान्दधातने त्यनुवर्तते। एतदुक्तं भवति। महच्च च दर्शनं परब्रह्म लक्षणं रमणीयं तदस्माकं कुरुते ति। अथवा हि शब्दो यस्मा दर्थे द्रष्टा व्याख्यायते नहि वेदे माव-

(१) का० आपोहिष्ठे तिपर्णकषाय पक्वमुदकमासिञ्चति पिण्डे। २६। २। १६। पलाशत्वक्क्वथितं जल पिण्डे ऋचत्रयेण सिञ्चेदितिसूत्रार्थः।

* [illegible] सिन्धुद्वीपदृष्टा
† [illegible] मयोभुव [illegible]
‡ [illegible]
§ [illegible]

मनुवसाप्यनर्थक्यमिष्यतेसंभवेसति । आपोहि। हे आपः हि यस्मान्मयो भुवः । ता न ऊर्जे । ताः शब्दस्य पञ्चम्यां सन्मतिः । तस्मा ह्योता रसान् अन्नाय स्थापयत । महे तेच । रमणीयाय * चक्षसे दर्शनीयाय ॥ ५० ॥ † योवः । यश्च वः युष्माकं शिवतमः शान्ततमः रस° । तस्य भाजयत भागिनः कुरुत । इहैवस्थितान्नः अस्मान् । उशतीरिव ।

योवः॥ शिवतमोरसस्तस्यभाजयतेहनः॥ उशतीरिवमातरः॥५१॥

तस्म्माऽअरम्। तस्म्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ। आपो

वयक्रन्तौ। ‡ कृतसंप्रसारणस्यै त द्रूपम्। कामयमाना इव मातरः मातृशब्दः संबन्धवचनः यथाकामयमाना मातरः पुत्रस्य कल्याणं तैस्ते रथैर्भाजयेयुः एवं भाजयत ॥ ५१ ॥ तस्माऽअरम्। अज मिति मात्रे लकारस्य रेफ श्छान्दसः। हे आपः तस्यच रसस्यअध स्तन

* चष्टे पश्यतिपश्यनर्शनिचक्षः चक्षसेदर्शनाय तथैवचसे।

† वैवाय इति शेषः।

‡ वाकरणौनिरोधे वमवानो इत्यत्र वमयावणादुपितस्य निवीप्।

मन्तयाचितस्य। वो युस्म त्संवन्धिनः अलं पर्याप्तं "गमाम" गच्छाम वयम्। पर्याप्तं नाम रसविपये * वैद्व्यार्थं सदात्व्यार्थं वा यस्य च्चयाय जिन्वथ। च्चयो निवास इत्याद्युदात्तः। षष्ठ्यर्थे चतुर्थी यस्ये ति सामानाधिकरण्यात्। यस्य आङ्गति परिणामभूतस्य च्चयस्य निवासस्यै भदेशेन जिन्वथ। जिन्वतिः प्रीतिकर्मा। तर्प्पयथ। पञ्चा ङ्गति परिणामक्रमेण दं

# जुनयंथाचनः ॥५२॥ मित्त्रःसुᳲ सृज्ज्य ॥ पृथिवीम्भूमिञ्चुज्ज्योतिं

ब्रह्मादि स्तंब पर्यंतं जगत। तत्र हे आपः † जनयथ। नः अस्मान् भोक्तृत्वेन। आजान देशत्र माधास्यते ॥ ५२ ॥ अज लोमैः संसृजति (१) ‡ मित्रः संसृज्य। मैत्री उपरिष्टा बृहती। अध्वर्यु राह। मित्रः आदित्यः "संसृज्य" एकीकृत्य पृथिवीम् द्युलोका न्तरिक्षम्

(१) का० अजलोमभि संसृजतिमित्रः सस्रज्ये ति। १६। २। १८। अजाद्यानि पूर्वलोमानिस्थ्लोतानितैःपिण्डं मिश्रयती तिसूत्रार्थः।

* महीधरमुद्रेवभा मदार्वभिर्वा।

† भुत्पादयत चाग्निविशिष्टतरमभोजनकाङ्कत।

‡ मित्रदैवत्योपरिष्टाद्बृहतीयोऽष्टाचोरष्टपुदौमाद्यमार्थं।

भूमि वचनः पृथिवी शब्दः। इहतु द्युलोकवचनो गृह्यते। पृथिवीं द्युलोकम् भूमिन्व मांज्योतिषा अजलोमैः सहसं सृज्यमद्य प्रयच्छत्वि ति शेषः। अजस्या नेयत्वा तल्लोमानि ज्योतिः शब्देन भणितुं शक्यन्ते। अह मपि च गृहीत्वा सुजातं कल्याण जातं त्वां जात-

षासुह ॥ सुजातञ्जातवेदमयुक्ष्मायंत्त्वासꣳसृंजामिप्प्रजाब्भ्यं ॥५३॥

रुद्द्राःसꣳसृज्ज्यं। पृथिवीम्बृहज्ज्योतिꣳ समीधिरे॥ तेषांम्भानुर

जंस्स्रऽइच्छुक्क्रोदेवेषंरोचते॥ ५४॥ सꣳसृंष्ट्टांव्वसुंभिꣳ॥सꣳसृंष्ट्टांव्व

वेद संजात मज्ञान मग्नि मजलोमाख्यं संसृजामि अयक्ष्माय अव्याधितायै। प्रजाभ्यः प्रजाना मिति संनतिः॥५३॥ शर्करायोरसाश्मचूर्णैः संसृजति (१)। रुद्राः संसृज्य। अनुष्टु प्रौद्री। रुद्राः संसृज्य एकीकृत्यशर्करायो रसाश्म चूर्णैः पृथिवीं पार्थिवंपिण्डम्। इहन्महत्।

(१) का० शर्करायोरसाश्म चूर्णैरुद्रा सꣳसृज्येति। १६। ३। १८। सूक्ष्मसिकतालोह किट्टपाषाण चूर्णैं पिण्डं मिश्र यतीतिसूत्रार्थः।

ज्योतिरग्निलक्षणम्। उपायांसमीधिरे। संदीपितवन्तः उप स्वमग्निं संवत्सरं धारितवन्तः। तेषामिदानीं फलमाह। तेषांरुद्राणां भानुर्दीप्तिः। अजस्रहृत्। जस उपक्षये इच्छन्दएवार्थे। अनुपक्षीण एव। शुक्रः। शुक्रः देवेषु निर्द्धारणे सप्तमी। रोचते देदीप्यते ॥ ५४ ॥ * तिसृभि रनुष्टुभि सिनीवाल्य दितिदेवताभि र्मृदं संयौति (१)। संसृष्टाम् संसेविताम्। वसुभिः रुद्रै श्च

संसृष्टां वसुभीरुद्रैर्धीरैः कर्म्मण्यां मृदम्॥ हस्ताभ्याम्मृद्वीङ्कृत्वा सिनीवाली कृणोतु ताम्॥ ५५ ॥ सिनीवाली सुकपर्दा॥ सुकुरीरा स्वौपशा॥

धीरैः बुद्धिमद्भिः। धीशब्दोबुद्धिवचनः रोमत्वर्थीयः। कर्मण्याम् कर्मणाया संपद्यते सा कर्मण्या-तांकर्मण्याम्। मृदं मृत्तिकाम्। हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु करोतु ॥ ५५ ॥ या सिनीवाली सुकपर्दा। कपर्दः केशसंयमनप्रकारः। साधु केशं संयमना। वेणिर्वाक-पर्दः। सुकुरीरा। कुरीरो मुकुटः। शोभन मुकुटा। स्वौपशा। शोभन मुप शेते यासा-

(१) का० म सृष्टामितिम यौति। त्र्यृचेन मृत्पिण्डं सम्यक्मिश्रयतीति।

* सिनीवाल्यादि ऋचां दिति दिवादि ... ।

खे पया। विद् ग्धोशयने करकण्ठ कूजितादिभि विलासैः। सा तुभ्यं हे * अदिते महि महति। उखां दधातु स्थापयतु हस्तयोः ॥ ५६ ॥ उखां कृणोतु। करोतु शक्त्या सामर्थ्येन। बाहुभ्याम् अदितिः धियावुद्धा च कृता सती। माता पुत्रं यथा उपस्थेउत्सङ्गे। अग्निं बिभर्तु धारयतु।

सातुभ्यमदितेमह्योखान्दधातुहस्तयोः ॥ ५६ ॥ उखाङ्कृणोतु। शक्त्याबाहुभ्यामदितिर्द्धिया ॥ मातापुत्रंयथोपस्थेसाग्निम्बिभर्तुगर्भऽआ ॥ मखस्य शिरोसि ॥ ५७ ॥ वसवस्त्वा ॥ कृण्वन्तु

गर्भे। आ। आकारआत्मनोयोग्यांक्रियामाक्षिपति। आधारय। गर्भशब्द उखाभ्यन्तर वचनः। ‡ह्यपिण्डमादते(१)। ‡ मखस्य यज्ञस्य शिरोसि। आहवनीयो यज्ञस्य शिरस्तदुद्धारणादि ह्यपि

(१) का॰ यजमान उखाकरोति मदशा दायमखस्यशिरइति। १६। ३। २१। यजमानपश्चात्तत्पिण्डामदमादाय द्वादशाङ्गुलिविस्तार लिखितापाठमश्चकोष्टकायां कृतायां यजमानः पिण्डमदमादा यत्र यमेवोखाकरोति एकपशुपक्षे प्रादेशायामविस्तारोर्ध्वां चतुरस्रा पञ्चपशुपक्षेविभागोनवयोविस्तारङ्गुलायामविस्ताराभूर्ध्वां प्रादेशेनेवेतिसूत्रार्थः।

---

* पदौमे भदितिरदितिर्देवमातेतिवाच्या निरु। ४। २१।  ‡ उपपिण्डेयस्यथजु यजुर्गायत्रीछन्द।

प्रवर्त्ततेऽच्चरणया गिरः शब्दः ॥५७॥ तं दृढयति (१)। * वसवस्त्वा। वसवस्त्वा कुर्वन्तु हे उखे गायत्रेण छन्दसाङ्गिरस्वत् यथाङ्गिरसाकृता। यत स्त्व कृता सतीध्रुवा स्थिरासि पृथिवी

गायत्रेणच्छन्दसाङ्गिरस्वद्ध्रुवासिपृथिव्यसिधारयामयिप्रजाᳬं गाय

स्पोषङ्गौपत्त्यᳬसुवीर्य्यᳬसजातान्न्यजमानायरुद्रास्त्वाकृण्वन्तुत्त्रै

ष्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसिधारयामयिप्रजाᳬंरा

यस्पोषङ्गौपत्त्यᳬसुवीर्य्यᳬ सजातान्न्यजमानायादित्यास्त्वाकृण्व

न्तुजागतेनच्छन्दसाङ्गिरस्वद्ध्रुवासिद्यौरसिधारयामयिप्रजाᳬंरा

चासि अत स्त्वां ब्रवीमि धारय स्थापय मयि। यजमानाये तिचतुर्थ्यन्त स्पद सुपरिष्टाच्छ्रूयते

(१) का० वसवस्त्वेतिप्रथयति। १६।३।२२। यजमान आत्ता मृदमुखातलाय प्रादेशमात्रविपुला करोतिमूत्रार्थं।

* प्रजापतिर्देवताम् आर्ष्युष्णिक्।

तद्दिङ्सप्तम्यन्तं कृत्वायोज्यते। सामानाधिकरण्यात्। अन्नं धनस्य च पुष्टिं। गोपतिं त्वं च। शोभनं च वीर्यं वीरकर्म। * सजातान् समानजातान् भ्रातॄन्। धारयेति सर्वत्राभिसंबध्यते। उत्तरेषु

यस्पोषङ्गौपत्त्यᳪसुवीर्य्यᳪ सजातान्यजमानायुव्विश्वैत्त्वादेवा व्वै

श्वानराऽ अवृत्त्वानुष्टुभेनुच्छन्दसाङ्गिरस्वद्ध्रुवासिदिशोसिधार

यामयिप्प्रजाᳪ रायस्पोषङ्गौपत्यᳪ सुवीर्य्यᳪ सजातान्यजमाना

मन्त्रे षु विशेषः। (१) रुद्रा स्त्वा अन्तरिक्ष मसि। (२) आदित्यास्त्वा द्यौ रसि। (३) विश्वेत्वादे-

(१) का॰ पश्चानुवाय सर्वत प्रथम धातुमादधाति रुद्रास्त्वेति। १६। ३। २७। प्रथनानन्तर प्रथितत्तलस्य प्रान्तान्स पांनूर्ध्वं नीत्वाप्रथमां पिण्डकामन्त्रे स योजयतीतिसूत्रार्थः।

(२) का॰ स लिप्यत्प्रत्य क्तवोत्तरमादित्यास्त्वेति। १६। ३। २८। तामुखां शिथिलमृदालिप्त्वा वारिणामृदुं कृत्वोत्तर धातु द्वितीय पिण्डिकापूर्वोपरियोजयतीतिसूत्रार्थः।

(३) का॰ विश्वेत्वेतिसमीकरोति। १६। ३। २९। पूर्वोक्तमानांकरोतिसूत्रार्थः।

* समानोदर्यान्भ्रातॄन्।

य० य० वं० २४६ उ० रा०

यजूंषि ॥६०॥ अभ्र्याखभ्रं खनति (१) अदितिष्ट्वा अदितिस्त्वां देवी * विश्वदेव्यावती। विश्वैर्देवैः सहितपृथिव्याः मह्स्थाने अङ्गिरा इव खनतु।† हे अवट कूप। उखा मव दधातु। (२) देवानां त्वा।

व्याः सधस्थेऽअङ्गिरस्वत्खनत्त्ववट देवानान्त्वा पत्नीर्देवीर्विश्वदे

व्यावतीः पृथिव्याः सधस्थेऽ अङ्गिरस्वद्दधतूखे धिषणास्त्वा देवीर्वि

श्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वदभीन्धतामुखे वरूत्री

ष्ट्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वच्छ्रपयन्तूखे

इत उतरं पञ्चसु यज्जु पुस्तुत्युत्ता न्यभिषे यानिव्याख्यायन्ते। ओषधयोवैदेवानांपत्न्यः दधतु स्थाप-

(१) का० अभ्र्यामभ्रं चतुरस्रं खनत्यदितिष्ट्वेति। १६।४।८। अपाढोखाविशव्योतिपापाश्चीय चतुरस्रमभ्र्याखनतीतिसूत्रार्थं।

(२) का० देवानांत्वेत्युखान्युब्जाम्। १६।४।११। अधोमुखामषाढोतरतोगर्तस्थापयतीतिसूत्रार्थं॥

* विश्वे देवा देवा यस्याः सा विश्वदेव्या [illegible] विश्वदेव्यावती मंत्र सोमान्यादिनादीर्घ।

† अवटदेव [illegible]

यत उक्ते। अग्निनादीपयति। (१) धिषणा स्त्रीम् धिषणावाक्। अभीन्धताम्। इन्धीदीप्तौ यपयति। (२) वरूत्रीष्ट्वा अहो रात्राणि वैवरूत्रय:। तानि हि हणवन्ति। पचति द्वाभ्याम्।

ऽग्नास्त्वादेवीर्व्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वत्पं चन्तूखेजनंयस्त्वाच्छिन्नपत्रादेवीर्व्विश्वदेव्यावतीः पृथिव्याः सध स्थेऽअङ्गिरस्वत्पंचन्तूखे ॥ ६१ ॥ मित्रस्यंचर्षणीधृतः ॥ मित्रस्यंच

ग्नाना स्त्राग्ना ह्येतामग्रे देव: छन्दांसि वैग्ना:। छन्दोभिर्हि स्वर्गं लोकं गच्छति। जनयस्त्वा। नक्षत्राणि वैजनय:। अच्छिन्नपत्रा: अनवच्छिन्नपत्रा: ॥ ६१ ॥ आचरति। (३) मित्रस्य चर्ष-

(१) का० अयणेनावष्यादक्षिणाग्न्यग्निनादीपयतिधिषणास्त्वेति। १६। ४। ४। १४। उखास्थापनानन्तरं विश्वज्योतिषस्तृतीयस्याऽवधायस्रपणं सर्वमाच्छादक्षिणाग्नेराभीतेनवह्निनोखांदीपयतीतिसूत्रार्थं।

(२) का० वरूत्रीष्ट्वे तीश्रमाणोजपति। १५। ४। १३। सामर्थ्यादुखोपरिस्थस्रपणं छिद्रं कृत्वातेनोखापश्यन् त्रीणियजूंषि जपतीतिसूत्रार्थं।

(३) का० आचरतिमित्रस्येति १६। ४। १६। भस्मोमूतं स्रपणमुखाया पराकरोतीतिसूत्रार्थं।

यावैश्वानराः विश्वान्नारयन्तितारयन्ति * वैश्वानराः दिशोसौति ॥५८॥ बितृतीय उत्तरे वर्तिसर्वतः करोति ।(१)† अदित्यैरास्नासि । व्याख्यातम् । (२)बिलंगृह्णाति । अदितिर दीना देव माता ते तव य ॥५८॥ अदित्यैरास्ना । अदित्यैरास्नास्यदितिष्टेबिलङ्गृभ्णातु॥ कृत्वायुसामहीमुखाम्मृन्मयींयोनिमग्नये॥ पुत्रेभ्युःप्रायच्छददि बिलमस्य मध्य गृभ्णातु निदधातु । (३)‡ कृत्वाय । उष्णागतु ष्टुव्यायादित्याया उक्तगुणा अदितिः सा कृत्वाय । त्वायकच्छान्दस उपन्ननम् । कृत्वा । मही महतीम् उखाम् । योनिं स्थानम् ।

(१) का० वितृतीय उत्तरे । वर्तिसर्वत करोतादित्यैरास्नेति । १६ । ३ । ३० । उखोर्ध्वमानव धावि भजेरापरि वृतीय भागे सर्वत्र मृन्मयी मेखला करोतितलाभ्य खलान्तमपि प्रतिदिशचतुष्टोरम्भ स्तनयुक्ता कुर्यादितिसूत्रार्थः ।

(२) का० विलगृह्णातादितिष्टइति । १६ । ४ । २ ।

(३) का० कृत्वायेतिनिदधाति । १६ । ४ । ४ । एवमुखां निधायभूमौस्थापयतीतिसूत्रार्थः ।

* विश्वेनरैर्भौयमेविश्वानरानयन्तिवाविषं यानराबासर्वविनीवाविषं भोमरेभीयोवाडितावावैश्वानरा एवभूताकवेलाकुर्वन्तु ।

† राधादिवत्र यजुर्णायत्री ।

‡ प यमनुष्टुभाव विकृष्णेवतीयपादचतुरैर्जीवेभेनषाविकामनुष्टुप्चव वतीय पर्कीमत्र ।

ग्नये घान्यर्थम् पुत्रेभ्यः मायच्छत्प्रादात् ग्रपयाम् ग्रपयन्तु। इति करणः प्रयोजनवशात

तिऽश्रपयानिति॥ ५८ ॥ वसंवस्त्वा। धूपयन्तुगायत्रेणच्छन्दसा ङ्गिरुस्वद्रुद्रास्त्वाधूपयन्तुत्रैष्टुभेनुच्छन्दसाङ्गिरुस्वदादित्यास्त्वा धूपयन्तुजागतेनुच्छन्दसाङ्गिरुस्वद्विश्वेत्वादेवावैश्वानराधूपयन्त्वा नुष्टुभेनुच्छन्दसाङ्गिरुस्वदिन्द्रस्त्वाधूपयतुव्वरुणस्त्वाधूपयतुव्विष्णु स्त्वाधूपयतु ॥६०॥ [ ११ ] अदितिष्ट्वा ॥ देवीर्व्विश्वदेव्यावतीपृथि

नार्थः ॥५८॥ सप्तभिरश्वशकृत्पिण्डैरुखांधूपयतिसप्तभिर्यजुर्भिः प्रतिमन्त्रम् ॥ (१)वसवस्त्वा। ऋच्यर्थानि-

(१) का॰ सप्तभिरश्वशकृत्पिण्डैरुखाम्धूपयति दक्षिणाग्न्यादीप्तैरेकैकेनवसवस्त्वे तिप्रतिमन्त्रम् १६ ४ । ८ ।; दक्षिणाग्नौ प्रदीप्ते सप्तभिरश्वशकृत्पिण्डैरुखामतिमन्त्र धूपयत्यध्वर्युः धूमायमानमेकैकमश्वशकृत्पिण्डमादायैकैकेन मन्त्रेण उखायामध्ये वह्नि-प्रचभा मयेदिति सूत्रार्थः ।

* सप्तयजुष्युखादग्धा/निवीधिवरणायवा तुर्यसामगनदीपश्यमसप्तमीयजुर्वधिवीष्ट यजुरजुष्ट प् ।

णीधृतः । मैत्रीगायत्री। मित्रस्य दिव्यस्य चर्षणीधृतः । चर्षणयो मनुष्याः तेषां धार-णे अधिकृतस्य अतः देवस्य। अतः रक्षणं । सनातनम् पुरातनं पुराणम् द्युम्नं च यशः अन्नं-वा । चित्रश्रव स्तमम् । अतिशयेन चाकर्णनीयं श्रवणीयं च वयं स्तुम इतिवाक्यशेषः।

र्षणीधृतोवोदेवस्यसानसि ॥ द्युम्नञ्चित्रश्रवस्तमम् ॥ ६२ ॥ देवस्त्वा ॥ सवितोद्वपतुसुपाणिःस्वङ्गुरिःसुबाहुरुतशक्त्या ॥ अव्यथमानापृथिव्यामाशादिशऽआपृण ॥ ६३ ॥ उत्थायबृहती ॥ भवोदु

याचे महीतिवा। यद्वा। यस्य मित्रस्य चर्षणीधृतः पालने पुराण मस्ति द्युम्नं चित्रश्रवस्तमम् सयजमानस्या भिमेत मर्थं साधयतु ॥ ६२ ॥ उद्वपति। देवस्त्वा। बृहती उख्या। देवः त्वा त्वां भवतीम् उद्वपतु । उद्वपनतु प्रकाशो करोतु। * सुहस्तः। † स्वङ्गुरिः शोभनाङ्गुलिः। लकारस्य रेफश्छान्दसः। सुबाहुः सुभुजः । उतशक्त्या अपिशक्त्या अपिबु द्ध्याति । उत शब्दः

* शोभनौपाणीयाक्रकोयस्य।
† शोभनाच गुष बाल्यायस। ...

समुच्चयार्थः । उद्वपतीत्यनुवर्त्तते । त्वं च सवित्रा उद्धृता सति (१) अव्यथमाना अचलन्ती । पृथिव्याम् आस्थिता आशा दिशो दिशः विदिशश्च आ पृण आपूरय आज्यतिरसेन ॥ ६३ ॥ उद्गच्छति । उत्थाय बृहती । पूर्वार्द्धं उख्यं उत्तरामैत्रः । एतस्मा द्वाजनस्थाना दुत्थाय ।

तिष्ठद्ध्रुवात्वम् ॥ मित्रैतान्त्ऽउखाम्परिददाम्यभित्त्याऽएषामाभेदि ॥६४॥ व्वसवस्त्वा । च्छृन्दन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्रुद्रास्त्वा

बृहती महति भव । तत उत्तिष्ठ । प्रवर्त्तस्व । स्वकीये कर्मणि । यत स्त्वं ध्रुवास्थिरासि स्वभावतः । परिगृह्यपात्रे करोति । (२) मित्रैतान्तइति । हे मित्र एतां ते तव उखांपरिददामि प्रयच्छामि । किमर्थम् । अभित्त्यै अभेदनाय । एषा च उखा त्वया गृहीता

(१) का० उखामुतानां करोत्यव्यथमानेति । १६ । ४ । २१ । २२ । अव्यथमपाकत्यायाढांवह्निर्निष्काश्योखामुतानामुतानामूर्ध्वं सुखीकरोतीति सूत्रार्थः ।

(२) का० पात्रेकरोतिमित्रैतान्तइति । १६ । ४ । ११ । हस्तगृहीतामुखामुत्तरतः पूर्वं स्थापिते कस्मिंश्चित्पात्रे स्थापयतीति सूत्रार्थः ।

तिव्याख्यातम् ॥६७॥ (१) उखा माहवनीये धिष्ययति। मासुभित्थाइतिगायत्रीत्रिष्टुभ्यामुखादेवत्या-
भ्याम्। अग्नि श्चे दमितिपादश्चाग्नेयश्च। हे उखे मा त्वं भित्थाः। भिदिरविदारणे। भिद्यस्व।

व्वरीतसुक्खाम् ॥ व्विश्वरवीराय इंषुङ्गतिद्युम्नं व्वंणीतपुष्पसेस्वा
हां ॥ ६७ ॥ मासु।भित्थामासुरिषोम्बंधृष्णुव्वीरयस्वसु॥ अग्निं
श्श्चेदङ्करिष्णपथः ॥ ६८ ॥ दृᳬहंस्वदेवि। पृथिविस्वस्तयंऽआसुरीमा

सुकारोनर्थकः। माचरिषः। रिषति हिंसा कर्मा। माविनश्यस्व। हे अम्बअम्बे तियोषायाश्रा-
मन्त्रणम् धृष्णा धृष्टं प्रगल्भं वीरयस्व वीरकर्म कुरुष्व। अग्निधारणं चराम्। किञ्च। इत

(१) का० दण्डोच्छ्रयणान्तं कृत्वाध्वर्युयजमानयोरन्यतरउखामाहवनीयेऽधिश्रयतिमुञ्जकुलायशण कुलायावस्तीर्णामन्तरे शणामासुभित्था इति तिष्ठमुदङ्प्राङ्। १६।४।२१। श्रोहृभणहोमानन्तरं दीचणीयाशेषं समाप्यकृष्णाजिनदीचा दिदण्डोच्छ्रयणान्तं प्राकृतं कर्मकृत्वाध्वर्युर्यजमानो वेशानाभिमुखः प्राग्वातिष्ठन् दृग्हयेनसमिद्धे आहवनीयेउखामारोपयतिकीदृशोमुखां मुञ्जतृणनिर्मितं पचिनोडं मुञ्जकुलायः शणनिर्मितं तच्छणकुलायस्ताभ्यांमध्येच्छादितामादौ शण कुलायेनततोऽन्येनेतिसूत्रार्थः।

उत्तरम् अग्नि श्च त्वं च इदं कर्म आसमाप्तेः करिष्यथः पचनम् ॥ ६८ ॥ इम् इस्वदेवि । हे उखे इंहस्वदृढीकुरु आत्मानम्। हे देवि पृथिवि। कार्यं कारणो पचारो वर्णनार्थः। स्वस्तये अविनाशाय। कस्मा त्त्व मिद मुच्यसे। यत आसुरीमाया। असुः प्राणः। रेफउपजनः। प्राण संबन्धिनीमाया प्रज्ञा। स्वधया अन्नेन निमित्त भूतेन कृतासि। किञ्च। जुष्ट

यास्वधयांकृतासि ॥ जुष्टंन्देवेभ्यऽइदमंस्तुहव्यमरिंष्टात्वमुदिंहियज्ञेऽअस्मिन् ॥ ६९ ॥ अग्नेंऽसुपिंरासुतिंऽप्रत्नोहोतावरेंण्यंः ॥

प्रियं देवेभ्यो ऊतम् इदं हव्यं हविः अस्तु। त्वं प्रसादात्। या उख्ये ग्ना वाहुतयो ह्यन्ते तापच्यन्ते। त्वमपि अरिष्टा अनवखण्डिता उदिहि उद्गच्छ। यज्ञे अस्मिन् वर्त्तमाने ॥ ६९ ॥ (१) उख्येग्नौत्रयोदशसमिधः प्रादेशमात्रीः आदधाति। तयो दशभिराग्नेयीभि र्ऋग्भिः।

(१) का॰ अग्नावाकृदवयोदशार्ध्यां प्रादेशमात्री समिधआदधाति। १६। ४। २२। घृतोवाकामुंकीद्रवदति अभितापादुखायांयज्ञीजातिप्रादेशमितास्रयोदशसंख्याका समिधोजुहोतिता क्रमेणाद्य घृतक्लिन्नासुकसमिधमादीक्षमुकीधमन इतिमूनाथं।

द्देगायत्री । द्रुन्नः सर्पिरासुतिः । द्रुरन्नो न्नमद्नं.यं यस्य सद्रुन्नः । द्रुशव्दो द्रुमपर्यायः । सर्पिरासुतिः । सर्पि घृतं मासनन स्थानीयं यस्य ससर्पिरासुतिः । प्रत्नः पुराणः । होता देवाना माह्वाता । वरेण्यो वरणीयः । सहसस्पुत्रः । वलस्य पुत्रः । यतो मथ्यमानो जायते तस्मा-

सहंसस्पुत्रोऽअद्भुतः ॥ ७० ॥ शतम् ५०० ॥ परंस्याऽअधिं ॥ संव्वतोवंरार ॥ ऽअभ्यातंर ॥ यत्राहमस्म्मितार ॥ ऽअंव ॥ ७१ ॥ पुत्रम

देव सुच्यते । अद्भुतः अनन्यसमः । यद्दत्थंभूतो ग्निः स कार्मुकिंसमिधं भक्षय तिष्ठति शेषः । नह्यवाख्यातं विद्यते नचाख्यातेन विनावाक्यपरिसमाप्तिः ॥ ७० ॥ शतम् ५०० । * वैकङ्कतीमादधाति । (१) परस्या अधि संवत् इति संग्रामनामसु पठितम् । संपूर्वस्य वनतेर्गत्यर्थस्य । संगच्छन्ते-

(१) का० वैकङ्कतींपरस्यादिति । १६ । ४ । २६ । विकङ्कततरुसमिध जुहोतीतिसूत्रार्थ ।

* चापे श्रीगायत्रीविषयदशाङ्गमध्यायाणमादेय ।

च्चयोधाः । परस्याः संबन्धिन्याः संवतः अभिसकाशात् । अवरान् अस्मदीयान्अभ्यातर अभ्यागच्छ । ततो यत्र जनपदे अह मस्थितान् अव पालय । तर्पय वा ॥ ७१ ॥ (१) औदुम्ब-रीमादधाति । परमस्याः । तिस्रोनुष्टुभ । परावत इति दूरनामसु पठितम् परमस्याः परावतः । परम दूरम् तस्मात् । हे रोहिदश्व । रोहितोग्नेः हरित आदित्यस्येतिनिघण्टुः । हे अ-

स्याः परावतः ॥ परमस्याः परावतो रोहिदश्व इहागहि ॥ पुरीष्यः पुरुप्प्रियोग्ने त्वन्तरा मृधः ॥ ७२ ॥ यदग्ने । यदग्ने कानि कानि चि

ग्ने रश्व । इह आगहि आगच्छ । यतः त्वं पुरीष्यः पशव्योसि पुरुप्रियश्च * बहुजन प्रियश्च । औदुम्बरे बहून्येवायनानि तयोतदूर्ज्जं सर्वां वनस्पती न प्रति पच्यत इतिस्तुतिः । आगत्य च हे अग्ने त्वं तर विनाशय । मृधः संग्रामान् ॥ ७२ ॥ (२) अरश्मुहत्नामादधाति । यदग्ने ।

(१) का० औदुम्बरीं परमस्याइति । ११ । ४ । ३७ । ४७ । उदम्बरतरुसमिधं तृतीयामादधातीतिसूत्रार्थः ।

(२) का० अपर गृहकृष्णायदग्नइति । १६ । ४ । ४८ । कुठारविनाछिन्नांवालादिनाभग्नांयज्ञियतरुसमिधं चतुर्थीमादधातीति-सूत्रार्थः ।

* बहुमनष्येति ।

अप्नपम् अरोचनम भुरण्युम् भर्त्तार' वाहदोहादिभिः अग्निम् आग्नेयम् तद्धितलोपः। ईडे। याचामि उपधानाय। पूर्वचित्तिम् प्राक्चयनम्। प्राचंह्यग्निमुद्धरन्तीति। अग्न्यध्यासेनगो-स्तुतिः। नमोभिरन्नै रभ्युद्यतैः सत्वमेताभिः पर्व्वेष्टकाभिः पर्वभिः पश्चिष्टकाभिः ऋताष्टतौ। कल्पमानः गाम्माहिंसीः। अदितिमहीनां विराजम् तसैरस्तन्तसैर सह इत्यादि दशवीर्थाभि-

सौभिः॥ सपर्व्वभिर्ऋतुशः कल्पमानो गाम्मा हि॑ꣳसीरदितिं विराजम्॥ ४३॥ व्वरूत्रीन्त्वष्टुः॥ व्वरूत्रीन्त्वष्टुर्व्वरुणस्य नाभिमविं जज्ञानाꣳरजसः परस्मात्॥ महीꣳसाहस्रीमसुरस्य मायामग्ने माहिꣳसीः परमे व्व्योमन्॥ ४४॥ योऽअग्निः॥ योऽअग्निरग्नेरध्यजा-

यम्॥ ४३॥ अविमुपदधाति। वरूत्रीम्। वरान्हणोतीति वाकम्बलादिना आच्छादयति। त्वष्टुः वरुणस्यचनाभिम्। नहनम्। वारुणीच हित्वाष्टीचाविरितिश्रुतिः। अविज्ञज्ञानां यजमानानां रजसः परस्मात्। श्रोव वैपर' रजोदिशोवैश्रोव दिशः पर'रजइतिश्रुतिः मही'

महतीम् साहस्रीं सहस्रोपकारक्षमाम्। असुरस्य असुवतः प्राणवतः प्रज्ञानवतो वावरुण-समायाम् मह्याम् हे अग्ने माहिंसीः। परमेव्योमन्निति व्याख्यातम् ॥ ४४ ॥ अजमुपदधाति। योअग्निः। यः अजः अग्निः अग्नेः अधिसकाशात् अजायत उत्पन्नः। शोकात्पृथिव्या अधिअजायत। उतवाद्दिवस्परि। अपिचदिवोधिअजायत। यद्वैप्रजापतिः शोकादजायत वै दि-

यतशोकात्पृथिव्याऽउतवांदिवस्परि ॥ येनंप्रजाविश्वकर्माजजा नतमग्नेहेडुऽपरितेवृणक्तु ॥४५॥ चित्रन्देवानाम् ॥ चित्रन्देवाना मुदंगादनीकञ्चक्षुर्म्मित्रस्यव्वरुणस्याग्नेः ॥ आप्प्राद्यावापृथिवीऽअ न्तरिक्षᳬ सूर्यऽआत्माजगतस्तस्थुषश्च ॥ ४६ ॥ [ ९ ] इमम्मा ॥

वद्य पृथिव्येव शोकादजायतेतिश्रुतिः। येनाजेनप्रजाः विश्वकर्मा प्रजापतिः जजानजनितवान्। वग्ना अजोवाचोवैप्रजाविश्वकर्माजजानेतिश्रुतिः। तमज हे अग्ने हेडःक्रोधः परिहृणक्तुपरिवर्ज यतु तेतनमंमन्यो ॥ ४५ ॥ (१) चित्रन्देवानाम् होमेव्याख्यातम् ॥ ४६ ॥ अथपञ्चपशूनांशुचोत्सर्गः

(१) का० चित्र देवानामित्यर्धर्चेन स्रुवाहुतीमध्यमे। अडर्धंहयेनपुरुषशिरस्याहुति ह्य जुहोतीत्यर्थः।

(१) इमंमाहिंसीः। पञ्चविंशत्योदावसाना उत्तराणियजूंषि। पुरुषमेोत्सृजति। इमंपुरुषंमाहिंसीः शुचा। द्विपादम्पशुम्। द्विपाद्वाएषपशुर्यत्पुरुषः। सह स्राक्षः सन् हिरण्यशकलैर्वाएषसहस्राक्षः मेधाययज्ञायअन्नायवा। चीयमानः चयनेन संस्क्रियमाणः। मयुंपशुंमेधम् हेअग्ने जुषस्व।

हिंᳬसोर्द्विपादम्पशुᳬसंहस्राक्षोमेधायचीयमानः॥ मयुम्पशुम्मेधम ग्नेजुषस्वतेनंचिन्वानस्तन्वोनिषीद॥ मयुन्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु॥ ४७॥ इमम्मा॥ हिंᳬसीरेकशफम्पशुङ्कनिक्रदं वाजिनम्वाजिनेषु॥ गौरमारण्यमनुतेदिशामितेनंचिन्वानस्तन्वो

किंपुरुषोवैमयुः। तेनकिंपुरुषेणचिन्वानः। तन्वोनिषीदआत्मानं संस्कुरुष्व। इतउत्तरंयजुः। मयुन्तेतवशुक्सन्तापः ऋच्छतु। किञ्च। यंपुरुषंवयंद्विष्मः तंचतवशुकृच्छतुहिनस्तु॥ ४७॥

(१) धा० वर्हिर्वेदुदङ्तिष्ठन् पतिष्ठत उत्सर्गैरिमम्माहिंᳬसीत्तिप्रतिमन्त्रम्। १७। ५। १८। अग्नेरुत्तरीयवेदेर्वहिर्दक्षिणे उदङ्मुखस्तिष्टन्निमम्मेतुतत्मर्गं सप्त पञ्चमन्त्रे पुरुषादि शिरांस्युपति ष्ठतेऽध्वयुः। एकपशुपक्षेतमेव पञ्चभिरितार्थः।

यथास्वम्। इमंसाहिंसीः एकशफं पशुम् एकशफोगाएपपश्येदश्वः। कनिक्रदम अत्यर्थं क्रन्दितारम वाजिन वेगवन्तम् वेगवत्सुमध्ये व्यवस्थितम्। गौरम् गौरस्वगम् अनुदिशामितेतव। तेनचिन्वानइति व्याख्यानम्॥ ४८॥ अथगोः। इमंसाहस्रम। इमञ्चांसाहस्रम् सहस्राहम् शत-धारमुत्सम् उत्सः कूपः। बहुस्रोतसमिवकूपम् उपकारकम् वाहदोहादिभिः व्यच्यमान सरि-

निषीद॥ गौरन्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु॥ ४८॥ इमꣳ साहस्रम्॥ इमꣳ साहस्रꣳ शतधारमुत्संव्यच्यमानꣳ सरिरस्यमध्ये॥ घृतन्दुहानामदितिञ्जनायाग्नेमाहिꣳसीः परमेव्योमन्॥ गवयमारण्यमनुतेदिशामितेनचिन्वानस्तन्वोनिषीद॥ गवयन्तेशुगृच्छतु

रस्यमध्ये। विविधमच्यमानसुपजीव्यमानम् सरिरस्यमध्ये। इमेवैलोकासरिर मित्यादिश्रुतिः। घृतं दुहानाम अदितिमदीनाम् जनायमनुष्यायोर्थाय। पुंलिङ्ग स्त्रीलिङ्गाभ्यां मन्त्रौ गौः स्तूयते। अग्नेमाहिंसीरित्यादिव्याख्यातम्॥ ४९॥ अथावेः। इमम्णायुम्। इमम् ऊर्णा-

युम जर्णावन्तम् । वरुणस्यनाभिम् वरुणस्यनप्तृनम् अपत्यम् त्वचं पशूनां द्विपदाञ्चतुष्पदाञ्च । उभयरूपाणां पशूनां त्वग्रक्षणं करोति कम्बलादि नेत्याशयः । किञ्च । त्वष्टुः प्रजानां प्रथमं जनित्रम् । एतच्चत्वष्टा प्रथमं रूपं चकारेतिश्रुतिः । जनिवञ्जनम् । व्याख्यातमन्यत् ॥ ५० ॥

यन्द्विष्मस्तन्तेशुग्च्छतु ॥ ४९ ॥ इममूर्णायुं ॥ वरुणस्यनाभिन्त्वचंम्पशूनान्द्विपदाञ्चतुष्पदाम्॥ त्वष्टुःप्प्रजानाम्प्रथमञ्जनित्रमग्ग्नेमाहिंᳪसीःपरमेव्व्योमन्॥ उष्ट्रमारण्यमनुतेदिशामितेनचिन्न्वानस्तन्न्वोनिषीद ॥ उष्ट्रन्तेशुग्च्छतुयन्द्विष्मस्तन्तेशुग्च्छतु ॥ ५० ॥ अजोह्वि ॥ अजोह्यग्ग्नेरजनिष्टशोकात्सोऽअपश्यज्जनितारमग्ग्रे ॥

अथाजस्य । अजोह्वि । यः यज्ञ अग्नेः अजनिष्टजातः । शोकात्सन्तापात् । यद्वै प्रजापतेः शोकादजायततदग्नेः शोकादजायत इतिश्रुतिः । हिशब्दः पादपूरणः । सः अपश्यत् जनिता

रञ्जनयितारं प्रजापतिम। अग्रे प्रथमम् यथासीदृष्टव्यः। तेनचदेवा इन्द्रादयः। देव गा-मग्रमायन् नायन्देवात्तलितिस्वार्थिकः। किन्तर्हि। तस्य भावस्त्वतलाविति भाव प्रत्ययः षष्ठ्यर्थे चेयं द्वितीया देवत्वस्याग्रमायन्निति शब्द प्रकरणात्। तेनैवाजेन रोहंस्वर्गम् अयन् उपा-गच्छन्तु। मेधांसः यज्ञेयादेशाः। लोकमभिज्ञाः शरभादयोव्याख्येयाः ॥ ५१ ॥ (१) चित्योपस्था-

तेनंदेवादेवतामग्रंमायँस्तेनरोहंमायन्नुपमेध्यांसः ॥ शरभमार-ण्यमनुतेदिशामितेनंचिन्न्वानस्तन्न्वोनिषीद ॥ शरभन्तेशुगृच्छतु यन्द्विष्मस्तन्तेशुगृच्छतु ॥ ५१ ॥ त्वंयविष्ठ ॥ दाशुषोनॄँःपाहिशृ

नम्। त्वं यविष्ठ। गायत्र्याग्नेय्यनिरुक्ता। त्वंहे यविष्ठयुवतम। यद्वा युमिश्रणे। अतिशयेन मिश्रयितृतम। दाशुषः दत्तवतोहवींषियजमानस्य नॄन्मनुष्यान् पाहिपालय। शृणु-धिच गिरः स्तुतिलक्षणावाचः। किञ्चरक्षातोकम पत्यम्। उतत्मना। अपिच आत्मानं

(१) का० एताचत्व यविष्ठेतिचितोपस्थानम्। १७। ६। १। अग्निवेदेरागताग्निसमीपेऽर्धचित्यमुपतिष्ठते।

रत्त्वेति । श्रुत्युक्तोव्यत्ययः ॥ ५१ ॥ (१) पञ्चदशच्छन्दस्याः पञ्चदशभि र्यजुर्भि रुपदधाति । अपां

गृधीगिरः ॥ * रत्त्वांतोकमुतत्मनां ॥ ५२ ॥ [ ६ ] अपान्त्वा ॥ अ

पान्त्वेमन्त्सादयाम्म्युपान्त्वोद्मन्त्सादयाम्म्युपान्त्वाभस्मन्त्सादयाम्य

पान्त्वाज्ज्योतिषिसादयाम्म्युपान्त्वायनेसादयाम्म्यर्णवेत्त्वासदनेसा

दयामिसमुद्रेत्त्वासदनेसादयामिसरिरेत्त्वासदनेसादयाम्म्युपान्

त्वेमन्सादयामि । श्रुत्युक्तान्यभिधेयानि । † अपांत्वाएमन् । ‡ सप्तम्यालुक् । एमनि । द्रुणगतौ ।

(१) का० अपरेण स्वयमातृण्णामेतास्याः पञ्चपञ्चानूकान्ते व्यपान्त्वे मन्त्रिति प्रति मन्त्रम् । १७ । ६ । २ । तीर्थे नाग्निमारुह्य-स्वयमातृण्णामपरेण पूर्वानूकान्तमेतत् चतुर्ष्वप्यनूकान्ते व्यपान्त्वे मन्त्रितिप्रतिमन्त्रं पंचपंचापस्यासत्राइष्टका उपदधातीति । सूत्रार्थः ।

---

* पिबासोमं पिबासुतस्येत्यादि सूत्रेण गृणुधीगिरः इत्यत्र रत्त्वातोकमित्यत्र दीर्घः । प्राति० अ० ३ । सू० १३० ।

† त्वा एमन् त्वा चो ग्निवित्यत्र संहितायां समुद्रस्येमंस्त्वेमंस्त्वोद्मन्निति चेतिसूत्रेण एकादेशो निपात्यते । प्राति० अ० ४ । सू ५५ ।

‡ एमनीति प्राप्ते संहितायां नियम्दीबहुलमितिसूत्रेण क्वचिदिकारमात्रस्य लोपोभवति प्राति० अ० ३ । सू० १८ ।

अस्य मनिप्प्रत्ययान्तस्यै तद्रूपम्। वायुर्वा अपामेमन्। वायौतांसादयति। अपांत्वाश्रोझन्। उन्दीक्लेदने। ओपधयो वा अपामोझन् तुल्यव्याख्यानमन्यत्। भस्मन्। भषभत्सनदीप्त्योः। अन्नं वा अपांभस्मन्। ज्योतिपि। विद्युद्वा अपाञ्ज्योतिः। अयने। इयं पृथिवी अपामयनम्।

त्वाच्चयेंसादयाम्म्युपान्त्वासधिंषिसादयाम्म्युपान्त्वासादनेसादया म्म्युपान्त्वांसुधस्त्थेंसादयाम्म्युपान्त्वायोनौंसादयाम्म्युपान्त्वापुरीषे सादयाम्म्युपान्त्वापाथंसिसादयामिगायत्त्रेणंत्वाच्छन्दंतासादया मित्त्रैष्टुंभेनत्वाच्छन्दंसासादयामिजागंतेनत्त्वाच्छन्दंसासादया म्म्यानुंष्टुभेनत्त्वाच्छन्दंसासादयामिपाङ्क्तेंनत्त्वा च्छन्दंसासादया

अर्णवे। प्राणोवा अपामर्णवः। समुद्रे। मनोवैसमुद्रः। सरिरे। वाग्वैसरिरम्। क्षये। चक्षुर्वा अपांक्षयोनिवासः। सधिषि। श्रोत्रं वा अपांसधिः। सदने द्यौर्वा अपांसदनम्।

सधस्थे। अन्तरिक्षम् वा अपांसधस्थम्। योनौ। समुद्रो वा अपांयोनिः। पुरीषे। सिकता वा अपांपुरीषम्। पाथसि। अन्नं वा अपांपाथः। अन्नेतांसादयति। पञ्चच्छन्दस्याः पञ्चभिर्यजुर्भिरुपदधाति गायत्रेणत्वाच्छन्दसासादयामीत्यादि ॥ ५३ ॥ प्राणभृताः पञ्चाशदिष्टका उपदधाति। पञ्चाशद्भिर्यजुर्भिः। अयंपुरोभुवः। अग्निर्वं पुरः। तद्यत्तदाहपुर इत्यादिनिर्वचनम्।

मि ॥ ५३ ॥ अयम्पुरः ॥ अयम्पुरोभुवस्तस्यप्प्राणोभौवायनोव्वसन्तःप्प्राणायनोगायत्त्रीव्वासन्तीगायत्त्र्यैगायत्त्रङ्गायत्त्रादुपाᳪशुरुपाᳪशोस्त्रिवृत्त्रिवृतोरथन्तरव्वसिष्ठऽऋषिःप्प्रजापतिगृहीतयात्त्वया

तस्यप्राणः अपत्यम् भौवायनः वसन्तः ऋतुः। प्राणायनः प्राणस्यापत्यम् नडादित्वात्फक्। गायत्री वासन्ती गायत्रीच वसन्तस्यापत्यम्। गायत्रीगायत्रम्। गायत्र्याः सकाशाद्गायत्रम् सामनिरमिमीत। गायत्राद् पांशुः। गायत्रात्साम्न उपांशुङ्ग्रहं निरमिमीत। उपांशोः त्रिवृत्। उपांशोर्ग्रहात् त्रिवृत् स्तोमं निरमिमीत। त्रिवृतोरथन्तरम्। त्रिवृतस्तोमात्रथन्तरं पृष्ठन्नि-

रमिमीत। वसिष्ठऋषिः। प्राणोवैवसिष्ठऋषिः। प्रजापतिगृहीतयात्त्वया। गृह्णाति स्वज-
तिग्वचनः। प्रजापति सृष्टयात्त्वया। प्राणं गृह्णामि प्रजाभ्यः। अयं पुरोभुव इत्यादिभिर्दशभि-
र्भेदैः प्राणमेवैकमविशेषेणगृह्णामि। प्रजाभ्यो विशेषेणावस्थितम् ॥ ५४ ॥ अथदक्षिणतः।

प्प्राणङ्गृह्णामिप्प्रजाब्भ्यः ॥ ५४ ॥ अयन्दक्षिणा ॥ व्विश्वकर्म्मातस्यमनोव्वैश्वकर्म्मणङ्ग्रीष्म्मोमानसस्त्रिष्टुब्ग्रैष्म्मीत्त्रिष्टुभः स्वारᳬंस्वारादन्तर्य्यामोन्तर्य्यामात्पञ्चदशः पञ्चदशाद्बृहद्बृहतो भरद्वाजऽऋषिः प्प्रजापतिगृहीतयात्त्वयामनोगृह्णामिप्प्रजाब्भ्यः ॥ ५५ ॥ अयम्पु

अयंदक्षिणाविश्वकर्मा। अयंवैवायुर्विश्वकर्मायोयम्पवते। एषहीदं सर्वं करोमि तद्यत्तमाह
दक्षिणेति तस्मादेषदक्षिणैवभूयिष्टं वात्यायोवर्त्तात्। तस्य मनोवैश्वकर्मण इत्यादि इत्यव्याख्या-
न व्रतस्त्वपिकाण्डिकासु ॥ ५५ ॥ अथ पश्चात्। अयंपश्चोदिशयव्यचा। असौवा आदित्यः-

विश्वव्यचा । यदाह्यवेपवउदेति अथेदं सर्वं व्यचाभवति तद्यत्तमाह । पश्चादितिक्रियानिर्देशः ॥ ५६ ॥

पश्चात् ॥ * अयम्पश्चाद्विश्वव्यचास्तस्यचक्षुर्वैश्वव्यचसंव्वर्षाश्चाक्षुष्योजगतीव्वर्षाभ्योजगत्याऽऋक्समम्ऋक्समाच्छुक्रःशुक्रात्सप्तदशः सप्तदशाद्वैरूपञ्जमदग्निर्ऋषिः प्रजापतिगृहीतयात्वयाचक्षुर्गृह्णामिप्रजाभ्यः ॥ ५६ ॥ इदमुत्तरात् ॥ इदमुत्तरात्स्वस्तस्यश्रोत्रंसौवंशरच्छ्रौत्र्यनुष्टुप्शरदोनुष्टुभऽऐडमैडान्मन्थीमन्थिनऽएकविंशऽएकविंशाद्वैराजंव्विश्वामित्रऽऋषिः प्रजापतिगृहीतयात्वया

अथोत्तरतः । इदमुत्तरात्स्वः । दिशोवाउत्तरातद्यत् तमाहोत्तरादित्युत्तरात्तद्येतस्य त्स्वंस्माद्दिशः ।

* पश्चात्प्रतीचो दिशमञ्चतिगच्छतीतिपश्चात् प्रतीचोगमन शीलो विश्व उदित सन्प्रकाशयतीतिविश्वव्यचाश्चादितो-यप्रसिद्धस्तद्रूपासा। विश्वव्यचसइदवैश्वव्यचसम् ।

अथयत्स्वरित्याह। स्वर्गोऽसिलोकोदिशः ॥ ५७ ॥ अथमध्ये। इयमुपरिमितिः। चन्द्रमावा-उपरितद्यत्तमाहोपरीतिउपरिहिचन्द्रमा। अथयन्मतिरित्याह। वाग्वैमतिः। समान व्याख्या-

ख्योनं ऽऽस्त्वामिप्रजाभ्यः ॥ ५७ ॥ इयमुपरिमतिस्तस्यैवाङ्मात्या हेमन्तोव्वाच्च ऽ पुङ्क्तिहैमन्तीपुङ्क्त्यैनिधनवन्निधनवतऽआग्रयणऽआग्रयणात्त्रिणवत्रयस्त्रिᳬशौत्रिणवत्रयस्त्रिᳬशाभ्याᳬशाक्वररैवते विश्वकर्म्मऽऋषिःप्रजापतिगृहीतयात्वयाव्वाचंऽऽस्त्वामिप्रजाभ्यो लोकन्ताऽइन्द्रम् ॥ ५८ ॥ [ ५ ]

इतिश्रीवाजसनेयसंहितायान्त्रयोदशोऽध्यायः १३ ॥

नम्। लोकंतामिन्द्रमितितिस्रः प्रतीकगृहीताः। लोकंपृणच्छिद्रंपृण। ताअस्यसूददोहसः। इन्द्रंविश्वाअवीवृधन् ॥ ५८ ॥ इतिउवटकृतौ मन्त्रभाष्ये त्रयोदशोध्यायः ॥ १३ ॥

द्वितीयाचितिं देवा अपश्यन् तस्यांचितौ पञ्चाश्विन्यो यजुरन्ताः। अश्विनाध्वर्यू इत्यादि यजुः। प्रथमाविराट्। द्वितीयाद्याश्चतस्त्रस्त्रिष्टुभः। (१) ध्रुवचितिः। यात्वंध्रुवचितिः स्थिरनिवासा।

* ध्रुवचिंतिदृध्रुं वयोंनिं ॥ ध्रुवचिंतिदृध्रुं वयोंनिदृध्रुं वासिंदृध्रुं वंद्योनिमासीदसाधुया ॥ उक्वस्यकेतुम्प्रथमज्जुषाणाश्विनाद्ध्वर्यू

ध्रुवयोनिश्च अनश्वरस्थानाच। ध्रुवाचासि स्थितएवतांत्त्वांब्रवीमि। ध्रुवंस्थिरंयोनिंस्थानम्

त्रयोदशेऽध्याये प्रथमा चितिरुक्ता सा भूलोकरूपा। अयं वै लोकः प्रथमा चितिरिति श्रुतेः। चतुर्दशेऽध्याये द्वितीयादिचितित्रयं वक्ष्यते भूमेरूर्ध्वमन्तरिक्षादर्वाग्भागो द्वितीया चितिः। एतां द्वितीया चितिमपश्यन्यदूर्ध्वं पृथिव्या अर्वाचीनमन्तरिक्षात्तत्पामेष लोक इति श्रुतेः। देवैरश्विनौ प्रार्थितौ यथ्युवां भिषजौ ततो द्वितीयां चितिमुपधत्तमिति ताभ्यामुक्तं चित्युपधाने किमावयोः फलमिति देवैरुक्तं युवां चित्युपधाने देवानामध्वर्यू भविष्यथ इति ततस्ताभ्यां द्वितीया चितिरुपहितेति श्रुत्या तेऽश्विनावध्वर्यू इत्यादिकयोक्तम्। तत्रादौ पञ्चाश्विन्य इष्टका द्वितीयचितिमन्त्रा देवदेवत्याः।

(१) का० आश्विनीध्रुवचितिरिति प्रतिमन्त्रम्। पञ्चकण्डिकाभिराश्विनीसञ्ज्ञा इष्टका रेतःसिच्वेलायामुपदधाति प्रतीष्टकं नित्ये इति सूत्रार्थः।

---

* ध्रुवचितिं पट्सञ्च ऋतुभिर्मुखाग्नयाद्दि कार्षि द्वाग्नोद्यायुर्मेपट्कावाग्स्विष्टदेकाग्नं भोगोरुं कयाचतुष्कावष्टावेकत्रिंशं०मत्।

आसीद् अधितिष्ठ। सादयामासुम्। द्वितीयैकवचनस्यस्थाने या। उख्यस्याग्नेः केतुं प्रज्ञानं प्रथममाद्यम् जुषाणासेवमाना। उख्यस्याग्नेः प्रथमंप्रज्ञानम् इयमेवप्रथमाश्चिति स्तस्याश्चोपरिष्टान्निधीयते तस्मादेवमुच्यते। उत्तरंयजुः। किञ्च अश्विनौचाध्वर्यू सादयताम् इहइतः सिग्वेलायाम् त्वात्वाम्। केचिच्चतुर्थमेतंपादंवर्णयन्ति विष्टभ्नन्त्र॥ १॥ कुलायिनी। कुलायं

ध्र्युसादयतामिहत्वा ॥ १ ॥ कुलायिनीघृतवती ॥ कुलायिनीघृतवती पुरन्धिः स्योनेसीदसदनेपृथिव्याः ॥ अभित्वारुद्रावसवोगृणन्त्विमाब्रह्मपीपिहिसौभगायाश्विनाध्र्युसादयतामिहत्वा ॥ २ ॥

गृहं तदाकाराकुलायिनी। साहिरेतः सिग्वेलायामिष्टकाभिरुपहिताभिर्गृहाकाराभवति। एतश्चतोभविष्यतायोगेन। इहहिवभोर्ज्जारायाआकृतयः क्रोष्यन्ते। पुरंधिः। वज्ञहि इष्टकाजातमियंधारयतिचितिसंबद्धम्। यात्वमित्थंभूतातांत्वांब्रूमः। स्योनेसीदसदने पृथिव्याः। सुखरूपे उत्तविशरस्थाने पृथिव्याः किञ्च। अभित्वा। अभिगृणन्तु त्वांरुद्रादयः। किञ्च। इमां। इमा-

निमक्षाणि पीपिहि्याप्यायस्व। सौभगायमहते ऐश्वर्याय। अश्विनेतिव्याख्यातम् ॥ २ ॥
स्वैर्दक्षैः। स्वैर्वीर्यैः। दक्षपिता वीर्यस्यपालयिवीसती इहद्वितीयायांचितौसीद अवस्थान-
कुरु। दक्षशब्दइहवीर्यवचनः। प्रयोजनमाह। देवानांसुम्ने सुखाय। कथंननाम देवाः
सुखंप्राप्नुयुरिति। इहतेरणाय। महतेचरमणीयाय। यज्ञक्रतवे। किञ्च। शिवेवैभिसूनवे।

स्वैर्दक्षैः ॥ स्वैर्दक्षैर्दक्षपितेहसीददेवानाꣳसुम्नेबृहतेरणाय ॥ शिवे
वैभिसूनवऽआसुशेवास्वावेशातन्वासंविशस्वाश्विनाऽध्वर्यूसादय
तामिहत्वा ॥ ३ ॥ पृथिव्याःपुरीषम् ॥ पृथिव्याःपुरीषमस्यप्सोना
मतान्त्वाविश्वेऽअभिगृणन्तुदेवाः ॥ स्तोमपृष्ठाघृतवतीहसीदप्र

पिताइवभत्रपुत्राय। आसुशेवा। मर्यादयासाधु सुखयित्री। किञ्च स्वावेशा। स्वावेशेतिवि-
भक्तिव्यत्ययः। स्वावेशया। तन्वाआत्मनासंविशस्व। अवस्थानं कुरु। अश्विनाध्वर्यू। उक्तार्थः ॥ ३ ॥
पृथिव्याः पुरीषम्। यात्वं पृथिव्याः प्रथमायाश्चितेः पुरीषमिवासि। पृथिवीवैप्रथमाचितिः तस्या-

एतत्तृतीयमिव य द्वितीयेतिश्रुतिः। अप्सोनाम रसोनाम। अप्स इति रसपर्य्यायंदर्शयति। अपः र-नोतीत्यप्सः। अपांहिरसोगुणः। तस्यवा एतस्ययजुषोरसएवोपनिषदित्येतच्छ्रुतिर्दर्शयति। तां-त्वामुपधीयमानां विश्वेदेवाअभिगृणन्तु, अभिष्टुवन्तु। त्वमपिचस्तोमपृष्ठाघृतवतीचइहसीदद्वितीयस्यांचितौ। यांस्तोमस्यान्तरेऽस्यमानोभवति तैरेषास्तोमपृष्ठाघृतवतीचवसोर्धारादिभिर्होमैः।

प्रजावदस्मे द्रविणायजस्व विश्वेदेवाअभिगृणन्तु सादयतामिहत्वा ॥ ४ ॥ अदित्यास्त्वा ॥ पृष्ठेसादयाम्यन्तरिक्षस्यधर्त्रीं विष्टम्भनीन्दिशामधिपत्नीम्भुवनानाम् ॥ ऊर्म्मिर्द्रप्सो अपामसि विश्वकर्म्मातऽऋषि

ततः। प्रजावदस्मेद्रविणायजस्व। प्रजासंयुक्तानि अस्मभ्यंद्रविणानिदेहि। यजतिर्दानार्थः। शेषमुक्तम् ॥ ४ ॥ आदित्यास्त्वा। यात्वम् ऊर्मिः कल्लोल राशिः द्रप्सः रसः अपामसि। यस्यास्तेतव विश्वकर्मा प्रजापति ऋषिर्द्रष्टा। तान्त्वाम् अदित्याः पृथिव्याः पृष्ठेप्रथमायाञ्चिते सपरिसादयामि। कथंभूतामित्यतआह। अन्तरिक्षलोकस्य धारयित्रीम् विष्टम्भनीं संस्तंभनीम्

अन्तरिक्षस्य च। दिशामधिपत्नीम्। दिशामीशिनीम् भूतजातानांच। शेषंसमानोदर्कम् ॥ ५ ॥

रुपिश्वनांद्व्युयुंसांदयतामिहत्वां ॥ ५ ॥ शुक्रश्च ॥ शुक्रश्चशुचि
श्चुग्रैष्मांवृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवीकल्पन्ता
मापऽओषधयःकल्पन्तामग्नयःपृथङ्ममज्ज्यैष्ठ्यायसव्रताः ॥ येऽ
अग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ ग्रैष्मावृतूऽअभिकल्प
मानाऽइन्द्रमिवदेवाऽअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीद
तम् ॥ ६ ॥ [ ६ ] सजूर्ऋतुभिः ॥ सजूर्विधाभिःसजूर्देवैःसजूर्देवैर्वै

ऋतव्यउपदधाति। (१) शुक्रश्चशुचिश्च व्याख्यातम् ॥ ६ ॥ वैश्वदेवीरुपदधाति। विश्वेषान्देवाना-

(१) का० शुक्रश्च शुचिश्चेतावृतव्ये पूर्वयोरुपरि। प्रथमचितुरपश्चितयोर्ऋतव्ययोरुपरि द्वे ऋतव्ये पद्ये प्राग्लक्षणे अनूकमभित उदश्च उपदधाति, शुक्रश्च शुचिश्चेति प्रतीकमुपधाय। ग्रैष्मावृतू इति मन्त्रशेषो द्वे अप्यालभ्य पठ्य इति सूत्रार्थः।

मोपंम्। (१)सजूर्ऋतुभिः। यथा समानजोषणः ऋतुभिः प्रजापतिर्भूत्वाइष्टकाउपहितवान्। यथाच समानजोषणः विधाभिः। आपोवैविधाः। अग्निर्हीदंसर्वंविहितम्। यथाच समान-

योनाधैरग्नयेत्वावैश्वानरायाश्विनाध्वर्य्यूसादयतामिहत्वासजू

र्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः सजूर्देवैर्वयोनाधैरग्नयेत्वावै

श्वानरायाश्विनाध्वर्य्यूसादयतामिहत्वासजूर्ऋतुभिः सजूर्वि

धाभिः सजूरुद्रैः सजूर्देवैर्वयोनाधैरग्नयेत्वावैश्वानरायाश्विनाध्

ध्वर्य्यूसादयतामिहत्वासजूर्ऋतुभिः सजूर्विधाभिः सजूरादित्यैः सजूर्दे

वैर्वयोनाधैरग्नयेत्वावैश्वानरायाश्विनाध्वर्य्यूसादयतामिहत्वा

जोषणोदेवैः। यथाच समानजोषणः देवैर्वयोनाधैः। प्राणावैदेवावयोनाधाः। प्राणैर्हीदं-

(१) का० वसवदेवो सजूर्ऋतुभिरिति प्रतिमन्त्रम्। पञ्चमन्त्रे यस्य वैश्वदेवोसञ्ज्ञा इष्टका पूर्वादिपूपदधातीतार्थः।

सर्वं२युनं नह्म अथोछन्दांसि वैदेवानयोनाधाः। छन्दोभिर्ही दंसर्वंमन्नानंनह्म। एवमन्हमपि एताभिर्देवताभिः समानप्रीतिर्भू त्वा उपदधामि। अग्नयेवैश्वानरायत्वाम्। संवत्सरोवा अग्नि-र्वैश्वानर.। अश्विनौच अध्वर्यू सादयतामिहत्वाम्। एवमुत्तरेष्वपिमन्त्रेषु वसुरुद्रादित्यविश्वेदेवा

सुजूर्ऋतुभिः सुजूर्व्विधाभिःसजूर्व्विश्वैर्देवैःसुजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यूसादयतामिहत्वा ॥ ७ ॥ प्राणम्मे ॥ पाह्यपानम्मेपाहिव्यानम्मेपाहिचक्षुर्म्मऽ उर्व्याविभाहिश्श्रोत्रम्मे श्लोकय ॥ अपः पिन्वौषधीर्जिन्वद्विपादव चतुष्पात्पाहिदिवोवृ

याज्या.॥७॥प्राणभृत उपदधाति। (१)प्राणमेपाहि। गोपाय। अपानंमेपाहि। व्यानंमेपाहि चक्षु-र्मेउर्व्याविभाहि। विभावय। श्रोत्रंमेमश्लोकय। श्लोकइतिवाग्नामसुपठितम्। श्लोकपाहि

(१) का० प्राणभृत प्राणं मदति। पञ्चयजुर्भिं प्राणभृत्पञ्चका पूर्वादिपूपदधाति १७। ८। २०। पच वायुदेवतानि यजूंषि। प्राणो वायुर्वायुमेवास्मिन् तद्दधातीति श्रुते।

यो॑नं कुरु । अपस्याउपदधाति । अपः पिन्व । पिन्वतिः सेचनार्थः । ओषधीर्जिन्व । जिन्वतिः प्रीतिकर्मा । द्विपाद्व । द्विपादमितिविभक्तिव्यत्ययः । अवगोपाय । चतुष्पात्पाहि । चतुष्पादं-गोपाय । दिवोवृष्टिमेरय । द्युलोकाद्वृष्टिम् आईरय । आगमय ॥ ८ ॥ वयस्या उपदधाति ।

ष्टिमेर॑य ॥ ८ ॥ [ २ ] मू॒र्द्धा व्वयः॑ प्र॒जाप॑तिश्छन्दः॑ क्ष॒त्रं व्वयो॒ मय॑न्दुश्छन्दो॑ व्विष्ट॒म्भो व्वयोऽधि॑पतिश्छन्दो॑ व्विश्वक॑र्म्मा॒ व्वयः॑ पर॒मेष्ठी॒ छन्दो॑ व॒स्तो व्वयो॑ व्वि॒वलं॒ छन्दो॒ वृष्णि॒र्व्वयो॑ व्विशा॒लं छन्दः॒ पुरु॑षो॒ व्वय॑स्त॒न्द्रं छन्दो॑ व्या॒घ्रो व्वयोऽना॑धृष्टं॒ छन्दः॑ सि॒ꣳहो व्वय॑श्छ॒दिश्छ

अत्र्युक्तं निदानम् । प्रजापतेर्विश्रस्ता त्पथवउदक्रामन् छन्दांसिभूत्वा तान्गायत्रीभूत्वा वयसाभोत्प्रजापतिः । (१) मूर्द्धावयः प्रजापतिश्छन्दः चतुर्भिर्मन्त्रैः गायत्रीरूपः प्रजापतिः कल्प्यते ।

(१) का० वयस्याः पंच पंचानूकान्तेषु मूर्द्धा वय इति प्रतिमन्त्रं चतस्रः पुरस्तात् । दक्षिणोत्तरपश्चिमेष्वनूकान्तेषु पंच पंच पूर्वं तु चतस्रो वयस्यासञ्ज्ञका उपदधातीत्येकोनविंशतिमन्त्रैरित्यर्थः ।

मूर्द्धाप्रजापतिः प्राधान्यात्। वयः शरीरावस्था। प्रजापतिः स्वयमेवछन्दः। क्षत्रं वयः। प्रजापतिर्वै क्षत्रम्वयोभवत्। मयन्दच्छन्दः अनिरुक्तत्वात्प्रजापतिः। मयंसुखं ददातीतिमयन्दः। विष्टम्भोवयः। प्रजापतिर्विष्टम्भः। सहीदंसर्वं विष्टभ्नोति। अधिपतिश्छन्दः। प्रजापतिर्वा अधिपतिः। विश्वकर्मावयः। प्रजापतिर्वै विश्वकर्मा। परमेष्ठीछन्दः। आपोवै प्रजापतिपरमेष्ठी।

न्दः पष्ठवाड्वयो बृहतीच्छन्दऽउक्षावयः ककुप्छन्दऽऋषभोवयः सतोबृहतीच्छन्दोऽनड्वान्वयः ॥ ९ ॥ अनड्वान्वयः ॥ पङ्क्तिश्छन्दो धेनुर्वयो जगतीच्छन्दस्त्र्यविर्वयस्त्रिष्टुप्छन्दो दित्यवाड्वयो विराट्छ

न्दः पष्ठवाड्वयो गायत्रीरूपः प्रजापतिः पञ्चदशवक्ष्यमाणान्पशून्गृह्णाति। वयसा वयोवस्थयाजरया। असाज्जीर्णं परा वयसाप्त इतिश्रुतिः। वस्तोवयो विवलञ्छन्दः। वस्तः पशुः त्रिवलंछन्दोरूपमायित्वा दक्रामत् तंप्रजापतिर्गायत्रीरूपोवयसाप्नोत् एकपदावै विवलंछन्दः तद्विविधं वरमुत्कृष्टम्। पुरुषसंबन्धिहितच्छन्दः। एवमुत्तरेष्वपि मन्त्रेषुयोज्यम् दृष्णावे-

योविशाल छन्दः । हष्णिमेयं वयमाविवत्त विशालं द्विपदाछन्दआप्नोति । पुरुषोवयस्तन्द्र-छन्दः । तन्द्रंछन्दः पंक्तिः । व्याघ्रोवयोनाधृष्टंछन्दः विराड्वा । अनाधृष्टं छन्दः । सिंहोवयः छदिश् छन्दः । अतिछन्दावैछदिः छन्दः अथातोनिरुक्तानिवपश्चन्निरुक्तानि छन्दांस्यभिदधाति । पष्ठवाड्वय इत्यादिदश निगदव्याख्याता : ॥ ९ ॥ १० ॥ तृतीयांचिति मिन्द्राग्नीविश्वकर्मा नाप-

न्दुः पष्ठवाड्विर्व्वयोगायत्रीच्छन्दस्त्रिवत्सोव्वयऽ उष्णिक्छन्दस्तुर्य्यवा वाड्वयोनुष्टुप्छन्दोलोकन्ताऽइन्द्रम् ॥ १० ॥ (२] इन्द्राग्नीऽअ व्व्यथमानाम् ॥ इन्द्राग्नीऽअव्व्यथमानामिष्टकान्दृꣳहतंयुवम् ॥

यत् । ततस्वयमातृण्णा प्रथमा । (१) इन्द्राग्नी अव्यथमानाम् । अनुष्टुप् । पूर्वार्द्धं चं ऐन्द्राग्न-उत्तरः स्वयमातृण्णायाः । तत्रोत्तरार्द्धं चं पूर्वंव्याख्यायते । तत्रविबाधत इतिपुरुषव्यत्ययः । येयंद्यौ नद्यावापृथिवी अन्तरिक्षञ्च विबाधते अभिभवति । तामिन्द्राग्नीअव्यथमानाम् अचल-

(१) मा० तृतीयायाए स्वयमातृण्णामीन्द्राग्नी इति मध्ये । तृतीयायां चितावात्मनो मध्ये स्वयमातृण्णामुपदधाति ।

न्तोमिष्टकां दृंह तांदृढोकुरु तम् युवंयुवाम् ॥ ११ ॥ विश्वकर्मात्वा प्रजापतिः सादयतुइत्यादि

पृष्ठेनद्यावापृथिवीऽअन्तरिक्षञ्चविबाधसे ॥ ११ ॥ विश्वकर्मात्वा ॥ सादयत्वन्तरिक्षस्यपृष्ठे व्यचस्वतीम्प्रथस्वतीमन्तरिक्षंयच्छान्तरिक्ष दृ॑ꣳहान्तरिक्षम्माहि॑ꣳसीः॥ विश्वस्मैप्प्राणायापानायव्यानायोदा नायप्प्रतिष्ठायैचरित्राय ॥ वायुष्ट्वाभिपातुमह्यास्वस्त्याछर्दिषा शन्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ १२ ॥ शतम् ७०० ॥ राज्ञ्यसि॥ राज्ञ्यसिप्प्राचीदिग्विराडसिदक्षिणादिक्सम्म्राडसिप्प्रतीचीदि क्स्वराडस्युदीचीदिगधिपत्न्यसिबृहतीदिक् ॥१३॥ विश्वकर्मात्वा ॥

पूर्ववद्या व्ययम् अन्तरिक्षस्य पृष्ठे वायुष्ट्वा इति विशेषः ॥ १२ ॥ शतम् ७०० पंचदिश्या उपदधाति ।

वायुरपश्यत् (१) राज्ञ्यसीति प्रतिमन्त्रकम् ॥ १३ ॥ विश्वज्योतिष मुपदधाति । (२)विश्वकर्मात्त्वा ।

सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीम् ॥ विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ ॥ वायुष्टेऽधिपतिस्तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ १४ ॥ नभश्च ॥ नभस्यश्च वार्षिकावृतूऽअग्नेरन्तःश्लेषोऽसि कल्पेतान्द्यावापृथिवी कल्पन्तामापऽओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः ॥ येऽअग्नयः समनसोऽन्तरा द्यावापृथिवीऽइमे ॥ वार्षिकावृतूऽअभिकल्पमानाऽइन्द्रमिव देवाऽ

(१) का० पनूकेषु पच दिक्षा वैश्वदेवीवद्राज्ञ्यसीति प्रतिमन्त्रम्। वैश्वदेवीवदिति प्रतिदिशं रेत सिग्वेलायामनूकेषु पंच दिक्ष सम्मुखा इष्टका उपदधाति पंचमीं दक्षिणायोत्तरेणेति सूत्रार्थः।

(२) का० विश्वकर्मेति विश्वज्योतिषमुपरि पूर्वस्या-। प्रथमोपस्थिताया विश्वज्योतिष उपरि विश्वज्योतिषमिष्टकामुपदधाति।

वायुदेवत्या ॥ १४ ॥ (१) ऋतव्या । नभस्वदेवत्या ॥ १५ ॥ १६ ॥ दशप्राणभृतः । आयुर्मेपाहि

अभिसंविंशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ १५ ॥ इषश्चोर्ज्जश्च ॥ इषश्चोर्ज्जश्चशारदावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवीकल्पन्तामापऽओषधयः कल्पन्तामग्नयःपृथङ्ममज्ज्यैष्ठ्यायसव्व्रताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ शारदावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविंशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ १६ ॥ [ ६ ] आयुर्मे ॥ पाहिप्प्राणम्मेपाह्यपानम्मेपाहिव्व्यानम्मेपाहिचक्षुर्म्मेपाहिश्श्रोत्रम्मेपाहिव्वाचम्मेपिन्वमनोमे

(१) का॰ ऋतव्ये नभश्च नभस्यश्चेति । पूर्वं तव्ययोरुपरि द्वे ऋतव्येउपदधाति । ऋतुदेवतामुत्कृतिच्छन्दस्के यजुः । नभः श्रावणः नभस्यः भाद्रपदः । शेषं व्याख्यातम् ।

गोपाय। वाचमेपिन्व। तयोलक्षणांवाचं मेमम पिन्वसिंच। कामैः पूरय। मनोमेजिन्व। जिन्वतिः प्रीतिकर्मा। ज्योतिर्मेयच्छ देहि। सुखवोध्य मन्यत् ॥ १७ ॥ षट्त्रिंशच्छन्दसा। उपदधाति। (१) माछन्दः। अयंलोकोमितइवमा छन्दः छादनात्। प्रमाछन्दः।

जिन्वात्मानंम्मेपाहिज्ज्योतिर्म्मेयच्छ ॥१७॥ माच्छन्दः ॥ प्प्रमाच्छन्दः प्प्रतिमाच्छन्दोऽअस्रीवयश्छन्दः पङ्क्तिश्छन्दऽउष्णिक्छन्दोबृहतीच्छन्दोनुष्टुप्छन्दोविराटछन्दोगायत्रीच्छन्दस्त्रिष्टुप्छन्दोजगतीच्छन्दः पृथिवीच्छन्दः ॥ १८ ॥ पृथिवीच्छन्दोन्तरिक्षञ्छन्दोद्यौ

अन्तरिक्षलोकोवैप्रमा। अन्तरिक्षलोकः अस्माल्लोकात्प्रमित इवदृश्यते। प्रतिमाच्छन्दः। द्यौः प्रतिमा साहिअन्तरिक्षलोकेप्रतिमिता। अस्रीवयः छन्दः अन्नमस्रीवयः। यदेभ्योलोकेभ्य

(१) का० छन्दस्याः द्वादशद्वादशाध्ययेषु मा च्छन्द इति। अध्ययेषु पञ्चपुच्छाप्सन्धिषु, तिषु, द्वादशद्वादश छन्दस्यासञ्ज्ञा इष्टका उपदधातीति सूत्रार्थः।

आज्ञतिपरिणामभूतमन्नं सवतितदस्त्रयः। परतोनिरुक्तानि छन्दांसिपंक्तिप्रभृतीनि ॥ १८ ॥
(१) पृथिवीछन्दइति। यान्येतद्देवत्यानि छन्दांसितान्युपदधाति। छादयन्तीतिछन्दांसुच्यन्ते

ष्छन्दः समाश्छन्दोनक्षत्राणिच्छन्दोवाक्छन्दोमनश्छन्दः कृषिश्छन्दोहिरण्यञ्छन्दोगौश्छन्दोजाच्छन्दोश्वश्छन्दः ॥१९॥ अग्निर्देवता ॥ अग्निर्देवतावातोदेवतासूर्य्योदेवताचन्द्रमादेवतावसवोदेवतारुद्रादेवतादित्यादेवतामरुतोदेवताविश्वेदेवादेवताबृहस्पतिर्देवतेन्द्रोदेवतावरुणोदेवता ॥ २० ॥ मूर्द्धासि ॥ मूर्द्धासिराड्ध्रुवासि

॥ १९ ॥ (२) अग्निर्देवता वातोदेवता इत्येतावैछन्दांसि मिता अपिछादयन्ति ॥ २० ॥ चतुर्दश

( १ ) का० पृथिव्यादिदेवतानि। यानि छन्दांसि तद्रूपाणि। समा संवत्सरः। स्पष्टमन्यत्।

( २ ) का० इष्टके त्वमग्न्यादिदेवतारूपासि तामुपदधामीति सर्वत्र शेषः। अग्न्यादीनां देवतात्वं प्रसिद्धम्। अग्निर्देवता वातो देवतेत्येतावै देवताश्छन्दांसि तान्येव तदुपदधातीति श्रुतेः।

वालखिल्या उपदधाति द्वाभ्यामनुष्टुप्परोष्णिग्भ्याम् (१) मूर्द्धासिराट्। मूर्द्धासिशिरोभूतासि राट्। राजृदीप्तौदीप्ताचासि। ध्रुवास्थिरासि। धरुणाचधारयित्रीच धर्त्र्यसिधारयित्रीअसि। धरणी। धरणीचविधरणीच। मर्यादाभूताच। एवन्त्रिलोकसंस्तवः तिसृणामिष्टकानाम्। आयुषेत्त्वा वर्च्च-

ध्रुरुणांधुर्त्र्यसिधरणी॥ आयुषेत्त्वावर्च्चसेत्त्वाकृष्यैत्वाक्षेमायत्वा॥२१॥ यन्त्रीराड्यन्त्र्यसियमनीध्रुवासिधरित्री॥ इषेत्त्वोर्जेत्त्वारय्यैत्वापोषाय त्वालोकन्ताऽइन्द्रम्॥ २२॥ [६] आशुस्त्रिवृत्॥ आशुस्त्रिवृद्धा

सेत्वा कृष्येत्वाक्षेमायत्वा उपदधामीतिशेषः। एतासांचतसृणांवालखिल्या नां मन्त्रस्तवः॥ २१॥ परतोपि तिसृणां द्युलोकप्रभृतिलोकसंस्तवः। यंत्रीराट्। यमनीदीप्ताचासि। यंत्रीअसि। यमनीध्रुवाअसि। धरित्री। पशुसंस्तवः पूर्ववत्। इषेत्त्वोर्जेत्त्वा रय्यैत्त्वापोषायत्त्वा (२) लोकन्ता-

(१) का० वालखिल्या मम पुरस्तात्प्राणभृद्भ्यो यावरा द्वादश्याऽपरास्तु मूर्द्धासि राडिति प्रतिमन्त्रम्। प्रागुत्तरप्राणभृद्भ्यः पूर्वा अपरा वा मम वालखिल्यासप्तस्त्रा इष्टका उपदधाति मूर्द्धासीत्यादिसप्तमन्त्रै।

(२) का० उत्तरयोर्गिरधि लोकम्पृणा पूर्ववत्। उत्तरयोर्गिरारभ्य प्रथमचितिवदेव लोकम्पृणा उपदधाति। तत. पुरोपनिवापोपस्थाने।

इन्द्रमिति व्याख्यातम् ॥ २२ ॥ चतुर्थीञ्चितिस्यपयो पश्यन्। (१) आशुस्त्रिवृ दित्यष्टादशे ष्टकाः प्रतिमन्त्र मुपदधाति। स्तोमसंख्योपलक्षितैर्मन्त्रैः स्तोमानुपदधातीति श्रुतिः। प्रकटार्थामन्त्राः श्रुत्याच व्याख्याताः तथापि किञ्चित्किंचिदुच्यते। आशुः त्रिवृत् यएवत्रिवृत् स्तोमः सोनेन-मन्त्रेणोक्तः इत्येकं व्याख्यानम्। अथो वायुर्वा आशुः शीघ्रः त्रिवृत् त्रिलोकसंचारी। एवमु-

न्तः पञ्चदशो व्योमा सप्तदशो धरुणऽएकविꣳशः प्रतूर्त्तिरष्टादशस्तपो नवदशोऽभीवर्त्तः सविꣳशो वर्च्चो द्वाविꣳशः सम्भरणस्त्रयोविꣳशो योनि श्चतुर्विꣳशो गर्भाः पञ्चविꣳशऽओजस्त्रिणवः क्रतुरेकत्रिꣳशः प्र

परितनान्यपि व्याख्येयानि। भान्तः पञ्चदशः। चन्द्रमाउच्यते। सहिभातिच पञ्चदशा-हान्या पूर्यतेच अपक्षीयतेच। व्योमासप्तदशः। संवत्सरउक्तः। सहिविविध मवतिप्राणिनः सप्तदशावयवश्च। धरुणएकविंशः। आदित्यः स्तोमो वोच्यते। प्रतिष्ठावैधरुणः प्रतिष्ठैक-

(१) इतितृतीयाचिति का० उत्तरा पूर्वयोराशुस्त्रिवृदिति। पूर्वानूकान्तविहितयोर्दक्षिणोत्तरयोर्मध्ये उत्तरां जह्वामात्रीमुन्द-श्र,ख उपदधातीति सूत्रार्थः।

विंशः स्तोमः। आदित्यावामतिशा। मासादिभिः एकविंशात्रयवञ्च। परतः संवत्सरस्व-
रूपाणि व्याख्यानि प्रतूर्तिः संवत्सरः। सहिसर्वाणिभूतानि प्रतिरतिप्रवर्द्धयति। तपः।
संवत्सरोहि सर्वाणिभूतानि तपतिशीतोष्णावर्षैः। अभीवर्त्तः। संवत्सरोहि सर्वाणिभूतान्य-
भिवर्तते। तेनहि अभिवृत्तेन ऋतुलिङ्गानिभूतेपुदृश्यन्ते। वर्च्चः। संवत्सरोहि सर्वेषाम्भू-
तानां वर्च्चस्वितम इतिश्रुतिमुवन्तीमतुलोपंदर्शयति वर्च्चस्वीमहभाग्यवान्। संभरणः संवत्स-
रोहिसर्वाणि भूतानिसंभरतिउत्पादयति। संहरतिवाविनाशयति। योनिः स्थानम्। गर्भः।

# तिष्ठाचंयस्त्रि ६ शोब्रध्नस्यविष्टपंचतुस्त्रि ६ शोनाकः षट्त्रि ६ शोविं

संवत्सरः त्रयोदशमासस्त्रोच्यते। सचगर्भोभूत्वा ऋतून्प्रविशति। कथंपुन स्त्रयोदशमासः
ऋतून्प्रविशति। उच्यते। एकोनपञ्चाशाहोरात्रै श्चन्द्रोद्वादशराशीन् विभ्रमति स चान्द्र ऋतुर्भ-
वति। आदित्यस्त्वेकपञ्चाशदिवसैः राशिद्वयमतिक्रामति ससौरऋतुर्भवति। तैश्चसौरैर्ऋतुभिः
संवत्सरोभवति। ततश्चैकस्मि न्नृतौसौर चान्द्रोऋतुर्भवतः तिथिद्वयंच। एवंषड्ऋतुषु द्वाद-
शतिथयः प्रविशंति अपरेषुषट्स्वपरा द्वादशअपरेषुषट्तिथयः। सएषोद्वृत्तीयेषु संवत्स-

रेपुचान्द्रोमासः प्रविशति। मएवाधिमासः सएवत्रयोदशोमासः सौगान्द्रन्द्वाभ्यांतिथिभ्यां प्रविशति। ओजः। अत्रापिमतुब्लोपः। ओजस्वीसंवत्सरः ऋतुः। संवत्सरोहि सर्वाणि भूतानि करोतिइतिश्रुतिः। प्रतिष्ठाधिष्ठानम्। ब्रध्नस्यविष्टपम्। स्वाराज्यं वैब्रध्नस्य विष्टपम्

वर्तोष्टाचत्वारिꣳ शोधर्त्रञ्चतुष्टोमः॥ २३॥ [१] अग्नेर्भागः॥ अग्नेर्भागोसिदीक्षायाऽआधिपत्यम्ब्रह्मस्पृतन्त्रिवृत्स्तोमऽइन्द्रस्य भागोसिविष्णोराधिपत्यङ्क्षत्रꣳ स्पृतम्पञ्चदशस्तोमोनृचक्षसाम्भागोसिधातुराधिपत्यञ्जनित्रꣳ स्पृतꣳसप्तदशस्तोमोमित्रस्यभागोसिव

स्वाराज्यं स्वतन्त्रता। नाकः काम्यतइतिकंसुखम् तद्विपरीतमकं दुःखम नास्त्यकमसुखमस्मिन्निति नाकः। विवर्त्तः। विविधंवर्त्तन्ते तत्रगतानि भूतानीति विवर्त्तं पितृयाणः। धर्त्रं धारणम्। चतुष्टोमः चतुरुत्तरः स्तोमः चतुष्टोम उत्तरपदलोपीसमासः॥ २३॥ स्पृतं-

दशइष्टकाउपदधाति दशभिर्मन्त्रैः (१) अग्नेर्भागोसीत्यादिभिः। तत्रार्थवादः। प्रजापतिर्गर्भसे- केभ्यो देवेभ्य आधिपत्यमेकेभ्यः कल्पयित्वा ब्रह्मप्रसृतीनि भूतानि पाप्मनोव्यसृजत् त्रिवृदा-

र्ङ्गाग्स्याधिपत्यन्दिवोत्वृष्हिर्व्वातस्पृतऽएकविᳪं शस्तोमोव्वसूनाम्भागः ॥२४॥ व्वसूनाम्भागोसिरुद्राणामाधिपत्यञ्चतुष्पात्स्पृतञ्चतुर्विᳪं शस्तोमऽआदित्यानाम्भागोसिमरुतामाधिपत्यङ्गर्भास्पृताः पञ्चविᳪं शस्तोमोदित्यैभागोसिपूष्णऽ आधिपत्यमोजस्पृतन्त्रिणवस्तो

दिभिः स्तोमैः। इष्टकोच्यते। यात्वाम् अग्नेः भागोसि। यस्यांचत्वयि दीक्षायामाधि- पत्य ज्ञातम् ययाच त्वयाब्रह्मब्राह्मण्यं स्पृतंपाप्मनोव्यन्त्ये। रपनीतम्। त्रिवृत्स्तोमः त्रिवृ- त्स्तोमेनेतिविभक्तिव्यत्ययः। तान्त्वामुपदधामीतिशेषः। यद्वा। यात्वमग्नेर्भागोसि यस्यास्त-

(१) का० दक्षिणा पूर्वयोरग्नेर्भाग इति। पूर्वानूकान्ते त्रिवृतयोर्जङ्घामात्रोर्मध्ये दक्षिणामुपदधात्यु दधु ख उत्तरा पूर्वमुप श्रिता॥ दश यजूंषि चतुर्भिस्त्वमोहिन्युपधान षड भि षट्पद्योपधान दशेष्टका. सत्सप्ताय।

वत्रिहृत्स्तोम' यस्यांचत्वयिदीचाया आधिपत्याम् ययाचत्वया ब्रह्मचत्त्रेणाभिचितम् तांत्वामुपद-धामीतिशेषः। एवमन्यदपिव्याख्येयम्। जनित्रम्। आश्वयेणजायत इतिजनित्रम् ॥ २४ ॥ २५ ॥

मोदेवस्यंसवितुर्भागोसिबृहस्पतेराधिपत्यꣳसमीचीर्दिशंस्पृताश्चतुष्टोमस्तोमोयवानाम्भागः ॥२५॥ यवानाम्भागोस्ययवानामाधिपत्यम्प्रजास्पृताश्चतुश्चत्वारिꣳशस्तोमऽऋभूणाम्भागोसिविश्वेषान्देवानामाधिपत्यम्भूतꣳस्पृतन्त्रयस्त्रिꣳशस्तोमः सहश्च॥२६॥ सहस्यश्च ॥ सहस्यश्चहैमन्तिकावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावा

यवाः पूर्वपक्षाः अथवाअपरपक्षाः ॥ २६ ॥ (१) ऋतव्ये सहश्चसहस्यश्चेति ॥ २७। सृष्टीरुपदधाति

(१) का० ऋतव्ये सहश्च सहस्यश्चेति। अनूकमभितो द्वे पद्ये उपदधाति। ऋतुदेवत्य यजु। सहो मार्गशीर्ष सहस्य पौष एतौ हैमन्तिकौ हेमन्तावयवौ। शिष्टं पूर्ववत्तुल्यम्।

सप्तदशेष्टकोः सप्तदशभिर्मन्त्रैः । (१) एकयास्तुवते इत्यादिभिः तन्निदानभूताश्रुतिः । एतद्वैप्रजापति

पृथिवीकल्पन्तामापऽओषधयःकल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः ॥ येऽअग्नयःसमनसोऽन्तरा द्यावापृथिवीऽइमे ॥ हैमन्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ २७ ॥ [ ४ ] एकयास्तुवत ॥ प्रजाऽअधीयन्तप्रजापतिरधिपतिरासीत्तिसृभिरस्तुवतब्रह्मासृज्यतब्रह्मणस्पतिरधिपतिरासीत्पञ्चभिरस्तुवतभूतान्यसृज्यन्तभूतानाम्पति

रित्युपक्रम्य तेवैकेनस्तोष्यामहइति । मयाचैव युष्माभिश्चेति तथेतरेप्राणैश्चैव प्रजापतिना ।

(१) का० रेत सिग्वेलायां च सप्तदश सर्वतो नव दक्षिणेनानूकर्ठ० सृष्टीरिकया स्तुवतेति प्रतिमन्त्रम् । सर्वासु दिक्षु रेत सिग्वेलायां सृष्टिसञ्ज्ञा सप्तदशेष्टका उपदधाति तन्मध्ये प्रागनूक दक्षिणेन नव अर्वाग्दष्टावुत्तरेणेति सूत्रार्थः ।

यास्तुवतेति । एकया वाचा । अस्तुवत अस्तुतवान् । कः । सामर्थ्यात्प्रजापतिः । इदानीम्फल-

रधिंपतिरासीत्सुप्तभिंरस्तुवतसप्तऽऋषयोऽसृज्यन्तधाताधिंपतिरा

सीन्नवभिंरस्तुवत ॥२८॥ (१) नवभिंरस्तुवत ॥ पितरोंऽसृज्यन्तादिं

तिरधिंपत्न्यासीदेकादुशभिंरस्तुवतऽऋतवोंऽसृज्यन्तार्त्तवाऽअधिं

पतयऽ आसँस्त्रयोदुशभिंरस्तुवतमासाऽअसृज्यन्तसंव्वत्सुरोधिंपति

रासीत्पञ्चदुशभिंरस्तुवतक्षुत्रमंसृज्यतेन्द्रोधिंपतिरासीत्सप्तदुश

(१) नवभि सप्त भिर. प्राणौ द्वावध इति नवप्राणै प्रजापतिरस्तौत् तत पितर अग्निस्वात्तादय सृष्टा अदिति अत्र पिड़ता प्रजापतिपत्नि सृष्टानां पितृणामधिपत्नी स्वामित्वं नाधिकां पालयित्र्यासीत् नव वै प्राणा सप्त शीर्षन्नवाञ्चौ द्वौ तैरिति श्रुते ।

माह। प्रजाअधीयन्त। या: गर्भीभूता: प्रजा: प्रजापते रासन् ता: प्रजापत्यर्थम् अस्याप्यन्त

भिरस्तुवतग्राम्याः पशवोऽसृज्यन्तबृहस्पतिरधिपतिरासीन्नवदशभिरस्तुवत ॥२६॥ (१) नवदशभिरस्तुवत ॥ शूद्रार्यावसृज्येतामहोरात्रेऽअधिपत्नीऽआस्तामेकविंशत्यास्तुवतैकशफाः पशवोऽसृज्यन्तवरुणोऽधिपतिरासीत्त्रयोविंशत्यास्तुवतक्षुद्राः पशवोऽसृज्यन्तपूषाधिपतिरासीत्पञ्चविंशत्यास्तुवतारण्याः पशवोऽसृज्यन्तवायुरधिपतिरासीत्सप्तविंशत्यास्तुवतद्यावापृथिवीव्व्यैतांव्वसवोरु

(१) नवदशभि: दश हस्ताङ्गुलय: ऊर्ध्वाधःस्थछिद्ररूपा नव प्राणास्तैरस्तौत्। तत: शूद्रार्यौ शूद्रवैश्यावसृज्येतां सृष्टौ। अर्य: स्वामिवैश्ययो:। अहोरात्रे तयो: स्वामित्वेनास्ताम्। दश हस्ता अङ्गुलयो नव प्राणा इति श्रुते:।

स्थिताः । प्रजापतिरधिपतिरासीत् असांस्तुतौ । एवंषोडशानामिष्टकानां मन्त्राः एकव्या-

द्ध्राऽआदित्याऽअनुव्यायँस्तऽएवाधिपतयऽआसन्नवविंऽशत्त्यास्तुव

त ॥ ३० ॥ नवविंऽशत्यास्तुवत ॥ वनुस्प्पतयोसृज्ज्यन्तसोमोधि

पतिरासीदेकत्रिंऽशतास्तुवतप्रजाऽअसृज्ज्यन्तयवाश्चायवाश्चा

धिपतयऽआसँस्त्रयस्त्रिंऽशतास्तुवतभूतान्यशाम्म्यन्प्रजापतिःपर

मेष्ठ्यधिपतिरासील्लोकन्ताऽइन्द्रम् ॥ ३१ ॥ [ ४ ]

इतिसंहितायांचतुर्द्दशोऽध्यायः १४ ॥

स्थानाः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

इतिउवटकृतौ मन्त्रभाष्ये चतुर्द्दशोध्यायः १४ ॥

अग्ने जातान् पंचमीं चितिं परमेष्ठ्यपश्यत्। (१) तत्रादौ पंचासपत्ना उपधीयन्ते। तत्रादौ वि-विष्टुभा वाग्नेय्यौ पुरस्तादुपदधाति। (१) हे अग्ने जातानुत्पन्नान् प्रणुदस्व रय नाशय अपुनरागम-

* अग्ने॑ जा॒तान् ॥ * अग्ने॑ जा॒तान्प्र णु॑दा नः स॒पत्ना॒न्प्रत्य॑जा॑ता॒न्नुद जातवेदः ॥ अधि॑ नो ब्रूहि सु॒मना॒ अहे॑ड॒न्तव॑ स्याम॒ शर्म॑न्त्रि॒वरू॑

नाय। नः अस्माकं सपत्नान् समानपतित्वान् समानपतित्वदर्शिनः शत्रून्। प्रत्यजातान् नुद। प्रति-च्छायप्रतिच्छायअजातान् अनुत्पन्नान् जनिष्यमाणान् नुदप्रेरय हे जातवेदः किञ्च। अधि-

(१) चतुर्दशेऽध्याये चितोयत्ततीयचतुर्थचितिमन्त्रा नुक्ताः पञ्चदशेपञ्चम चितिमन्त्राव्याख्या.

(१) का० पञ्चम्यामस्ते प्वाश्विनीवदसपत्ना अग्ने जातानिति प्रतिमन्त्रम् १७। ११। १। २। पञ्चम्यां चितावाश्विनीवत् असपत्नान्त्रा इष्टका अस्तं पूपदधाति अग्ने जातान् सहसा जातान् षड्शो चतुश्चत्वारिंश० अ अग्नेः पुरीषम् इति पञ्चमन्त्रे प्रत्येकमिति सूत्रार्थः।

---

* अग्नेजातान्पञ्चरश्मिनामत्यायचतस्रो राज्ञास्ययपुर पचकाविग्निमूर्द्धकोनविंशं० शदो नङ्स्त्ययोष्टौतपश्चनवसप्तपचपष्टि।

* धारयामयोजाव सत्स्व नुद सोपु जयतोरथ रच यज यच्छ मत्सथ पिपृत गायतातु येन नकारे इत्यनेनसत्वेण प्रणुदानस्य णनकारपरेदीर्घाभवति पा० अ० ३। मू०१०८।

नोअ्बूहिसुमनाअहेडन्। एवंनिर्द्धारितेषु मपपुगृहीतेषुच तदन्तेषुअधिब्रूहि अधिवदउपदिश यज्ञसंबन्धिनीमितिकर्त्तव्यताम् नः अस्माकम् सुमनाः स्नेहानुबन्धमनाः अहेडन्। अक्रु-ध्यन्। तत्रचस्यामभवेम। शर्मन् शरणेआश्रयेत्रि वरूथे। त्रिवरूथे। वरूथंगृहम् त्रिगृ-हेत्रिपुरे। उद्गौ। द्विपदचतुष्पदधनधान्योद्भूतश्रक्तौ। यद्वा। त्रिवरूथेयज्ञगृहेस्याम। त्रीणि-

थऽउद्भौ॥ १॥ सहंसाजातान्॥ सहंसाजातान्नप्रणुंदानःसुपत्न्नान्प्रत्यजाताञ्जातवेदोनुदस्व॥ अधिंनोब्रूहिसुमनस्यमानोव्वयᳬस्यामप्रणुंदानःसुपत्न्नान्॥ २॥ षोडशीस्तोमः॥ षोडशीस्तोमऽ

हियज्ञगृहाणिसदोहविर्द्धानाग्नीध्राणि। उद्भौ। उद्गतरि। अन्येषां यज्ञक्रतूनाम्॥ १॥ सहसाजातान् बलेनोद्भूतशत्रून्। प्रणुदय अस्मांसपत्नान्। यद्वा। सहसाबलेस्वशक्त्या-उत्पन्नान् प्रेरय अस्मत्कुलान्। प्रत्यजाताञ्जातवेदोनुदस्व। प्रतिनुदस्वअजाताननुत्पन्नान् हेजातवेदः। किञ्च। अधिनोब्रूहि सुमनस्यमानः। अधिब्रूहि अधिवद नः अस्माकं सु-

मनस्समानः शोभनचित्तः। यथाचवयमेवभवाम तथाकुरु। भूयोभूयश्चप्रणुद नः अस्माकंसप-
त्नान् ॥ २ ॥ दक्षिणतः। षोडशीस्तोमः। यस्यास्त्वषोडशीआदित्यः पञ्चदशकपालस्यत्वञ्-
भर्त्तास्तोमभृतः ओजोबलंचद्रविणंधनं तान्त्वामुपदधामि। उत्तरतः। चतुश्चत्वारिंशः। यस्या-

ओजो द्रविणञ्चतुश्चत्वारिꣳशस्तोमोव्वर्चो द्रविणम् ॥ अग्नेः पुरीषम
स्यप्सोनामतान्त्वाव्विश्वेऽअभिगृणन्तुदेवाः ॥ स्तोमपृष्ठाघृतवती
हसीदप्रजावदस्मे द्रविणायजस्व ॥ ३ ॥ एवश्छन्दोव्वरिवश्छन्दः शु

स्त्वंचतुश्चत्वारिंशः त्रिष्टुप्त्र्यक्षरसम्मितः स्तोमः वर्च्चश्चद्रविणं तांत्वामुपदधामि। पञ्चमी।
अग्नेः पुरीषम् त्रिष्टुम्। यात्वमग्नेः पञ्चदशकपालरूपस्यपूरयित्री। व्याख्यातमन्यत् ॥ ३ ॥ (१)
चत्वारिंशद्विराज श्चत्वारिंशद्भि यंजुर्भि रुपदधाति। एवश्छन्दः। अयंवैलोक एवश्छन्दः।

(१) का० विराजो दश दश प्रतिदिश पुरस्तात् यममेवश्छन्द इति प्रतिदिश दशदश विराट्संज्ञा इष्टका उपदधाति
तास्त्वारि शत्पदा एवेति सूत्रार्थः।

वरिवश्छन्दः अन्तरिक्षंवैवरिवश्छन्दः। शंभूश्छन्दः द्यौर्वैशंभूश्छन्दः। परिभूश्छन्दः दिशोवै-परिभूश्छन्दः। आच्छच्छन्दः। अन्नंवाआच्छच्छन्दः। मनश्छन्दः प्रजापतिर्वैमनश्छन्दः। व्यच-श्छन्दः असौवाआदित्योव्यचश्छन्दः। सिन्धुश्छन्दः प्राणोवैसिन्धुश्छन्दः। समुद्रश्छन्दः मनो-

म्भूश्छन्दः परिभूश्छन्दऽआच्छच्छन्दोमनश्छन्दोव्यचश्छन्दः सिन्धुश्छन्दः समुद्रश्छन्दः सरिरञ्छन्दः ककुप्छन्दस्त्रिककुप्छन्दः काव्यञ्छन्दोऽअङ्कुपञ्छन्दोऽक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दोविष्टारपङ्क्तिश्छन्दः क्षुरोभ्रजश्छन्दऽआच्छच्छन्दः प्रच्छच्छन्दः ॥ ४ ॥ आच्छच्छ

वैसमुद्रश्छन्दः। सरिरञ्छन्दः वाग्वैसरिरञ्छन्दः। ककुप्छन्दः प्राणोवैककुप्छन्दः। त्रिककु-प्छन्दः उदानोवैत्रिककुप्छन्दः। काव्यञ्छन्दः त्रयीवैकाव्यञ्छन्दः। अङ्कुपञ्छन्दः। आपोवा-अङ्कुपञ्छन्दः। अक्षरपङ्क्तिश्छन्दः असौवैलोकोऽक्षरपङ्क्तिश्छन्दः। पदपङ्क्तिश्छन्दः अयंवैलोकः पद-पङ्क्तिश्छन्दः। विष्टारपङ्क्तिश्छन्दः दिशोवैविष्टारपङ्क्तिश्छन्दः। क्षुरोभ्रजश्छन्दः असौवाआदित्यः क्षुरो-

भजरछन्दः ॥४॥ * आच्छच्छंदः प्रच्छच्छंदः अन्नं वा आच्छच्छंदोन्नं प्रच्छच्छन्दः। संयच्छन्दः रात्रिर्वै संयच्छन्दः। वियच्छन्दः असौ वै लोको वियच्छन्दः। निकायश्छन्दः वायुर्वै निकायश्छन्दः। विवधश्छन्दः अन्तरिक्षं वै विवधश्छन्दः। गिरश्छन्दः अन्नं वै गिरश्छन्दः भ्रज छन्दः अग्निर्वै भ्रजश्छन्दः।

न्दः प्रच्छच्छन्दः॥ संयच्छन्दो वियच्छन्दो बृहच्छन्दो रथन्तरञ्छन्दो निकायश्छन्दो विवधश्छन्दो गिरश्छन्दो भ्रजश्छन्दः सꣳस्तुप्छन्दो नुष्टुप्छन्द एवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विष्पर्द्धाश्छन्दो विशालञ्छन्दश्छदिश्छन्दो दूरोहणञ्छन्दस्तन्द्रञ्छन्दो ऽ

सꣳस्तुप्छन्दोनुष्टुप्छन्द इति वाग्वै सꣳस्तुप्छन्दो वागनुष्टुप्छन्दः। एवश्छन्दः वरिव श्छन्द इति तस्योक्तो बन्धुः। यथाश्रुतिव्याख्यानम्। यात्वम् एव: अवनात्पृथिवीलोकः छन्दः छादनात्

* आच्छत् आच्छादयति शरीरमाच्छदनम्। प्रच्छत् प्रच्छादयतीति प्रच्छदनम्। अत्र वा आच्छच्छन्दोऽत्र प्रच्छच्छन्द इति च ते.।

तान्त्रासुपदधामि इतिव्याख्या घर्म्मं प्रदर्शनम् ॥ ५ ॥ एकोनत्रिंशत्स्तोमभागानुपदधाति ।
(१) रश्मिनासत्यायसत्यं जिन्वेति । अत्रश्रुतिकृताव्याख्या । असुनादोजिन्व । अदोसत्सुपस्त्वा अ-

अङ्गाङ्गञ्छन्दः ॥५॥ [ ५ ] रश्मिमनासुत्त्यायं ॥ सत्त्यञ्जिन्न्वुप्प्रेतिं
नाधर्म्मणाधर्म्मञ्जिन्न्वान्न्वित्यादिवादिवञ्जिन्न्वसुन्धिनान्तरिंक्षेणा
न्तरिंक्षञ्जिन्न्वप्प्रतिधिनापृथिव्व्यापृथिवीञ्जिन्न्वव्विष्टम्भेनव्वृष्ट्यावृ
ष्टिञ्जिन्न्वप्प्रवयाहनाहञ्जिन्न्वानुयारात्र्यारात्रींञ्जिन्न्वोशिजावसु

धिपतिनोर्जोर्जञ्जिन्वेति । त्रिंशद्विहितामन्त्राः । तत्रप्रथमस्यमन्त्रगणस्य द्विकण्डिकावधिपरि-
पठितस्य व्याख्यानम् । असुनारश्मिना अदः सत्यं जिन्व । जिन्वतिः तर्पणार्थः । रश्मि-

(१) का० सर्वतोऽपाढावेलायाः स्तोमभागा रश्मिना सत्यायेति प्रतिमन्त्रं पञ्चदश दक्षिणेनानूकम् १७।११।१० । सपाढावेलायां सर्वदिक्षु स्तोमभागामन्त्रा इष्टका उपदधाति रश्मिनेत्याद्येकोनत्रिंशन्मन्त्रैः. तन्मध्ये पञ्चदश प्रागनूकं दक्षिणेन पर्यायचतुर्दश प्रागनूकमुत्तरेणोपधेया इति सूत्रार्थः ॥

नाश्वन्ने नसख्यायउपक्षितासतो सत्यं तपंय। मे तिनाश्वन्ने न। धर्मणाधर्मायेति विभक्तिव्यत्ययः। नद्विवादिवेश्वर्थायोपक्षितासतोदिवं जिन्व ॥ ६ ॥ ७ ॥ द्वितीयस्यमन्त्रवर्गस्यव्याख्यानम्। अदो-

ऽभ्योवसूञ्जिन्व प्रकेतेनादित्येभ्यऽआदित्याञ्जिन्वतन्तुनारायऽ॥६॥ तन्तुनारायस्पोषेणरायस्पोषञ्जिन्वस ऽसर्पेणाऽश्रुतायऽश्रुतञ्जि न्वैडेनौषधीभिरोषधीर्ज्जिन्वोत्तमेनतनूभिस्तनूर्जिन्ववयोधसा धीतेनाधीतञ्जिन्वाभिजितातेजसातेजोजिन्व ॥७॥ प्रतिपदसि॥ प्प्रतिपदेत्वानुपदस्यनुपदेत्वासम्पदसिसम्पदेत्वातेजोसितेजसेत्वात्रिवृ दसि ॥ ८ ॥ त्रिवृदसि ॥ त्रिवृतेत्वाप्प्रवृदसिप्प्रवृतेत्वाव्विवृदसिव्वि

धर्मायोपक्षितामतोधर्मंजिन्व। एवंद्वितीयान्तंपदं चतुर्थ्यन्तंकर्त्तव्यं सर्वत्रमन्त्रेषु। अन्विश्याग्ने- सम्मुखेत्वा। अदः असिविवृदसि। अमुष्मैत्वाविवृतेत्वा वाक्यधर्मः। यतः विवृदसि

विगुणासि। अन्नं हि विगुणम् अन्नं चत्वम् अतः विष्टतेर्थाय त्वासुपदधामि ॥ ८ ॥ प्रष्टणो- तिभ्रतानीतिप्रष्टत् अन्नमृयतस्त्वंप्रष्टदसिअतः प्रष्टतेर्थाय त्वासुपदधामीति। हतीयोव्याख्या- यते। अधिपतिनाईश्वरेण। ऊर्जा अन्नरसेन ऊर्जं मन्नरसं जिन्वतर्पय। अभिधेयगतां क्रियां

तेत्वासुवृदंसिसुहृतेत्वाक्रुमोस्याक्रुमायत्वासङ्क्रुमोसिसङ्क्रुमायत्वोत्क्रुमो स्युत्क्रुमायुत्वोत्क्रान्तिरस्युत्क्रान्त्यै त्वाधिपतिनोर्जोर्जंञ्जिन्न्व ॥९॥

[ 8 ] राज्ञ्यसि ॥ राज्ञ्यसिप्राचीदिग्वसंवस्तेदेवाऽअधिपतयो ग्निर्हेतीनाम्प्रतिधुर्तात्रिवृत्त्वास्तोमःपृथिव्याꣳश्रयत्वाज्यमुक्थ

पर्य्यालोच्याभिधानव्युत्पतिः कर्त्तव्या ॥ ९ ॥ नाकसद उपदधाति। (१) राज्ञ्यसि। या त्वं राज्ञी राजदीप्तौ। ईश्वरी अग्निप्राचीचदिक्। अस्याश्च वसवः तेतव देवा अधिपतयः अधिष्ठातारः।

(१) का० नाकसदोऽनूकेषु पूर्वमजं भ्रतव्यावेलायामाश्विनीवद्राज्ञ्यासीति प्रतिमन्त्रम् १। पूर्वानूके स्थानाभावात् पूर्वानूकवर्जं त्रिदिक्ष्वनूकेषु भ्रतव्यवेलायामनूकोपरि राज्ञील्यादिपञ्चकाण्डकाभिराश्विनीवन्नाकसत्सञ्ज्ञ इष्टका उपदधातीति सूत्रार्थः।

यस्मात्त्वमग्निर्हतीनामस्त्राणां वधहेतुभूतानांशरथिनिधारयिता तांत्वांब्रवीमि। त्रिष्टत्स्तोमः पृथिव्यांश्रयतु स्थापयतु। राज्यंचउक्थम्। अव्यथायैअचलनाय स्तभ्नातुस्थिरीकरोतु। रथन्तरंचसामप्रतिष्ठित्यैप्रतिष्ठानायस्तभ्नातु। अन्तरिक्षेलोके। ऋषयस्त्वांप्रथमजाः। प्राणावा-ऋषयः प्रथमजाः। देवेषुमध्ये। दिवः द्युलोकस्यमात्रयावरिम्णाच उरुत्वेनचप्रथन्तु पृथ्वीं

मव्व्यथायैस्तभ्नातुरथन्तरꣳसामप्प्रतिष्ठित्या ऽअन्तरिक्षुऽऋषयस्त्वाप्प्रथमजादेवेषुदिवोमात्रयाव्वरिम्णाप्प्रथन्तुव्विधर्त्ताचायमधिपतिश्चतेत्वासर्व्वेसंव्विदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु॥१०॥

व्विराडसि॥ व्विराडसिदक्षिणादिग्गुद्रास्तेदेवाऽअधिपतयऽइन्द्रोहे



कुर्वन्तु। प्रथयन्त्वितिप्राप्तेणिचोलोपः। विधर्ताचायमधिपतिश्च। निधर्त्तावाक्। अधिपति मनः। एतेचप्रथयताम्। तत्रएतेवस्वादयोयथोक्ताः सर्वेसंविदानाः। ऐकमत्येनावस्थिताः। नाकस्यपृष्ठे स्वर्गेलोके यजमानंचत्वांच सादयन्तु॥ १०॥ उत्तरासुकण्डिकासु

तीनाम्प्रतिधुर्त्ता पञ्चदुशस्त्वा स्तोमः पृथिव्या॑ᳬ श्रयतु * प्रउगमुक्थम
व्यथायै स्तभ्नातु बृहत्साम प्रतिष्ठित्या॑ऽअन्तरिक्षुऽऋषयस्त्वा प्रथमजा
देवेषु दिवो मात्रया वरिम्णा प्रथन्तु विधुर्त्ता चायमधिपतिश्च ते त्वा स
र्व्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानञ्च सादयन्तु ॥११॥ सम्म्रा
डसि ॥ प्रतीची दिगादित्यास्ते देवाऽअधिपतयो वरुणो हेतीनाम्प्रति
धुर्त्ता सप्तदुशस्त्वा स्तोमः पृथिव्या॑ᳬ श्रयतु मरुत्वतीयमुक्थमव्यथा
स्तभ्नातु वैरूपᳬ साम प्रतिष्ठित्या॑ऽअन्तरिक्षुऽऋषयस्त्वा प्रथमजा देवे
षु दिवो मात्रया वरिम्णा प्रथन्तु विधुर्त्ता चायमधिपतिश्च ते त्वा सर्व्वे
देवाः हेतीनां प्रतिधर्त्तारः स्तोमाः । उक्थानि सामानि चान्यानि भविष्यन्ति ।

* प्रउगं गा इति १ प्रउगं शस्त्रम् ।

संव्विदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥१२॥ स्वरा
डसि ॥ स्वराडस्युदीचीदिङ्मरुतस्तेदेवाऽअधिपतयः सोमोहेतीना
म्प्रतिधर्त्तैकविᳬं शस्त्वास्तोमः पृथिव्याᳬंश्रयतुनिष्केवल्यमुक्थमव्व्य
थायैस्तभ्नातुव्वैराजᳬंसामप्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथम
जादेवेषुदिवोमात्रयाव्वरिम्णाप्प्रथन्तुव्विधर्त्ताचायमधिपतिश्चते
त्वासर्व्वेसंव्विदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥१३॥

समानमन्यत् ॥ ११ ॥ (१) १२ ॥ (१) १३ ॥

(१) मथ पश्चात्। सम्यग्राजते सम्राट्। (१) भा त्वा रथं यथोतये इति मरुत्वतीयं शस्त्रम्°।
(२) मथोत्तरतः। स्वेनैव राजते स्वराट्। भभि त्वा शूर नोनुम इत्यादिक (२) निष्केवल्यं शस्त्रम्।

(१)——ऋ० वे० ८।१।८।१।
(२)——ऋ० वे० ७,२,१५:२२।

(१) १४ ॥ पञ्चचूडाउपदधाति। (२) अयंपुरः। योयमग्निः पुरः परस्तादुपधायोचर्य्यं त

अधिपत्न्यसि ॥ बृहतीदिग्विश्वेतेदेवाऽअधिपतयोबृहस्पतिर्हे

तीनाम्प्रतिधर्त्तात्रिणवत्रयस्त्रिंशौत्त्वास्तोमौपृथिव्याᳪश्रयतांव्वै

श्वदेवाग्निमारुतेऽउक्थेऽअव्व्यथायैस्तभ्नीताᳪशाक्वररैवतेसामनी

प्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्रथमजादेवेषुदिवोमात्त्रयाव्वरि

म्णाप्रथन्तुव्विधर्त्ताचायमधिपतिश्चतेत्त्वासर्व्वेसंव्विदानानाकस्यपृ

ष्ठेस्वर्ग्गेलोकेयजमानञ्चसादयन्तु ॥ १४ ॥ [५] अयम्पुरः ॥ अयम्पुरो

(१) अथ मध्ये। हे इष्टके अधिक पालयित्री बृहती मौढोर्ध्वा दिगसि। त्रिणवत्रयस्त्रिंशौ स्तोमौ त्वा पृथिव्यां श्रय-ताम्। वैश्वदेवाग्निमारुते शस्त्रे अचलनाय स्तभ्नीताम्। शाक्वररैवते समानी चान्तरिक्षे स्थिते त्वां स्तभ्नीताम्। द्विवचने विशेष। तत्सवितुर्वृणीमहे इत्यादि वैश्वदेवं शस्त्रम्। वैश्वानराय पृथुपाजसे इत्यादिकमाग्निमारुत शस्त्रम् उत्तमन्यजत्।

(२) का० पुरोपमोव्योपर्यय पुर इति पञ्चचूड़ा प्रतिमन्त्रं प्रतिदिश यथालिङ्गम् १। नाकसत्सु तूष्णीं चात्वालमृद प्रक्षिप्य नाक-

पुरइति दृत्युच्यते हरिकेशश्च हरितज्वाल: सुवर्णवर्णार्चिरिति यावत् । सूर्यरश्मिश्च । सूर्यमेवाग्ने: रश्मय: तस्य रथगृत्सश्च रथेऽवस्थितो गृत्स: मधावी । गृणते: स्तुतिकर्मण: रथयुद्धकुशल इत्यर्थ: । रथौजाश्च । रथेऽओजोऽस्यति रथौजा: । चकारौ समुच्चयार्थीयौ । सेनानीग्रामण्यौ । सेनां नयतीति सेनानी: ग्रामं नयतीति ग्रामणी: । वासन्तिकौ ताहृतू इति श्रुति: । पुञ्जिकस्थला-

हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ ॥ पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिस्तेभ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो

चक्रतुस्थला चाप्सरसौ । पुञ्जीकृतरूप लावण्यसौभाग्यगुणस्थला । क्रतूनां संकल्पानां स्थलमिव । स्त्रीद्रव्यस्वरूपादिस्थानं संकल्प: तन्मूलकस्तु काम: । दिशश्च उपदिशश्चेति महित्थि: । सेना च समितिश्चेति श्रुति: । दङ्क्ष्णव: । दशनशील: पशवो हेति वज्र: आयुधम् । पौरुषजनित: बध:

सदासुपरि सर्वदिक्षु यथालिङ्गं लिङ्गानतिक्रमेण यल्लिङ्गको मन्त्रस्तद्दिशि तन्मन्त्रेण पंचचूडासंज्ञका: पंचेष्टका उपदधातीति सूत्रार्थ: ।

विनाशः। प्रहेतिः प्रकृष्टमायुधम्। तेभ्योनमः अस्तु। तेभ्योहेतिप्रहेतिभ्यः नमस्कारोस्तु। तेचनोस्मानवन्तुगोपायन्तु। तेनोमृडयन्तु। तेअस्मान्सुखयन्तु। तेवयंहेतिप्रहेतिभिर्गुप्यमानाः यंपुरुषंद्विष्मः। असद्यानिष्टंचिन्तयामः यश्चपुरुषः नः अस्मान् द्वेष्टिअसा न प्रत्यप्रीतिं क-

यश्चनोद्वेष्टितमेषांजम्भेदध्मः ॥ १५ ॥ अयन्दक्षिणा ॥ विश्वकर्म्मातस्यरथस्वनश्चरथेचित्रश्चसेनानीग्रामण्यौ ॥ मेनकाचसहजन्याचाप्सरसौयातुधानाहेतीरक्षांसिप्रहेतिस्तेभ्योनमोऽअस्तु

रोति। तंपुरुषम् एषांहेतिप्रहेतीनाम् वयं जंभे दंष्ट्राकरालेमुखे। दध्मः प्रक्षिपामः ॥ १५ ॥

उत्तरेषु। (१) अयंदक्षिणा। दक्षिणतोविश्वकर्मासर्वस्यकर्तावायुः तस्यवायोरथस्वनः रथेवस्थितो-

(१) अथ दक्षिणत। दक्षिणस्यां दिशीति दक्षिणा दक्षिणादाजिति सप्तम्यन्ताद्दक्षिणशब्दादाच् प्रत्यय दक्षिणा दक्षिणत अयं विश्वकर्मा विश्व सर्वं कर्म यस्य विश्व करोतीति वा विश्वकर्मा वायु। अय वै वायुर्विश्वकर्मा योऽयं पवत एष हीदं सर्वं करोति तद्यत्तमाह दक्षिणति तस्मादेष दक्षिणैव भूयिष्ठं वातीतिश्रुते.।

महाध्वनः। स्वनः शब्दः। रथेचित्रः रथेवस्थितोविचित्रयोधी। मेनकाचसहजन्याच। मेनामानयन्तोरनां। समानानांजनानांसहजन्या। अप्सरसोहिसामान्याः। यातुधानाः रक्षांसि॥१६॥

तेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः॥ १६ ॥ अयम्पश्चात्॥ अयम्पश्चाद्विश्वव्यचास्तस्यरथप्प्रोतश्चासमरथश्चसेनानीग्ग्रामण्यौ॥ प्रम्लोचन्तीचानुम्लोचन्तीचाप्सरसौव्याघ्राहेतिःसर्प्पाःप्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनो

(१) अयंपश्चात्। विश्वव्यचाः आदित्योविश्वव्यचाः। सह्युदयेन सर्वंव्यञ्जनवत्करोति। तस्यरथ-

(१) पश्च पश्चात्। अवरस्मिन् प्रदेशे इत्यर्थे पश्चादिति सूत्रेण निपातः। पश्चात्पश्चिमदेशेऽयं विश्वव्यचाः आदित्यः विश्वं सर्वं सुदयेन विचति प्रकाशयति व्याप्नोति वा विश्वव्यचाः अस्तुन् पश्चिमायां स्पष्टं दृश्यत इति पश्चात्। असौ वा आदित्यो विश्वव्यचा। यदा ह्येवैष उदेत्यथेदꣳ सर्वं व्यचो भवति तदुत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्य न्तीति श्रुतिः।

प्रोतश्च। रथेरस्थितः प्रोतइव। असमरथः। अन्यैः रथिभिरतुल्यरथः। (१) प्रम्लोचन्तीचानु-म्लोचन्तीच। तुल्यव्याख्यानम्। व्याघ्राः सर्पाः॥ १७॥ (२) अयमुत्तरात्। अयंयज्ञः उत्तरतः।

मृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ १७ ॥ अ यमुत्तरात् ॥ अयमुत्तरात्संयद्वसुस्तस्यतार्क्ष्यश्चारिष्टनेमिश्चच सेनानीग्रामण्यौ ॥ विश्वाचीचघृताचीचाप्सरसावापोहेतिर्वातः प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चच

संयद्वसुः। संयन्तिवसुनोधनस्य लिप्सवोयं प्रति ससंयद्वसुर्यज्ञः। दीयतेहि तत्रप्रत्येभ्यः। तार्क्ष्यः तौक्ष्णेन्तरिक्षेक्षिपति पक्षाविति तार्क्ष्यः। अरिष्टनेमिः अनुपहिंसितायुधः। विश्वाचीचसर्वं प्रतिञ्च-

(१) प्रम्लोचति नर प्रतात्मान दर्शयतीति प्रम्लोचन्ती॥ अनु वार वारम्म्लोचन्तीत्यनुम्लोचन्तीतापसरसौ।

(२) यथोत्तरत। उत्तराध्मिन्त्रियुत्तरात् उत्तराधरेत्यादिना आच्प्रत्यय अयमुत्तरत सयद्वसु यज्ञ सम्यक् यन्ति गच्छन्ति वसुने धनाय य प्रति जना स सयद्वसु यज्ञ गतेभ्यो हि दानमावश्यकम् यज्ञस्योत्तरोपचारत्वादुत्तरात्।

चलशीला। साधारणाहिंसा। घृतचौघृताञ्चना। घृतंहिअप्सरसामन्नम्। तथाचोर्वशीवाक्यम् घृतस्यस्तोकं सकृदह्नः प्राश्नामीति। आपः वातः॥ १८॥ मध्ये। (१) अयमुपरि। अयंपर्जन्यउपरि। अर्वाग्वसुः। अर्वागवनं वसुधनमुदकलक्षणं प्रजाभ्योददातीत्यर्वाग्वसुः

नोद्द ष्टितमेषाञ्जम्भेदध्मः॥ १८॥ अयमुपरि॥ अयमुपर्य्यर्व्वाग्वसुस्तस्यसेनजिच्चसुषेणश्चसेनानीग्रामण्यौ॥ उर्व्वशीचपूर्व्वचित्तिश्चाप्सरसावबस्फूर्ज्जन्हेतिर्व्विद्युत्प्रहेतिस्तेभ्योनमो ऽ अस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भे

पर्जन्यः। तस्यसेनजिच्च। सेनांजयतीतिसेनजित्। सुषेणश्चशोभनसेनश्च। उर्वशीचउरः पृथुः वशः। कामोयस्या इति। उर्वशी। पूर्वचित्तिश्च। पूर्वंप्रथमं पुंसांचेतस्ताम भ्युपैतिसौभाग्यातिश-

(१) अथ मध्ये। उपरि ऊर्द्ध देशेऽयमर्वाग्वसु पर्जन्य उपर्यु परिष्टादिति निपात ऊर्द्ध प्रदेशे इत्यर्थे अर्वागधोमुखं य वसु धनं जलरूप यस्मात्सोऽर्वाग्वसु अधो जल प्रजाभ्यो ददातीत्यर्थ

यात्। अवस्फूर्जन्पर्जन्यः। हेतिः। स्फूर्जतिर्वज्रनिर्घोषार्थः। विद्युत्हेतिः॥१९॥ छन्दस्या उपधाति। (१)अग्निर्मूर्द्धा। आग्नेयं प्राकृतपश्चातपस्य चेत्यतः। प्रथमः त्र्यचोगायत्रः। प्रथमाव्याख्याता ॥२०॥ अयमग्निः। रूपेरभिनयेन दर्शयति। अयमग्निः सहस्रिणः। सहस्राणि बहूनियस्यवि-

दर्वसः ॥ १९ ॥ [५] अग्निर्मूर्द्धा ॥ दिवःकुकुत्पतिःपृथिव्याऽअ यम् ॥ अपाꣳरेताꣳसिजिन्वति ॥ २० ॥ अयमग्निः ॥ सहस्रिणो वाजस्यशतिनस्पतिः ॥ मूर्द्धाकवीरयीणाम् ॥ २१ ॥ त्वामग्ने॥ त्वामग्नेपुष्करादध्यथर्वानिरमन्थत ॥ मूर्ध्नोविश्वस्यवाघतः ॥

द्यन्तेतस्य। वाजस्यान्नस्य शतिनश्चपतिरधिपतिः। मूर्द्धाचरयीणाम् प्रधान भूतश्चधना- नाम् अग्निर्हि सर्वेषां धनानां प्रधानं दृष्टा दृष्टसाधनं हि। कविः क्रान्तदर्शनश्च अतः

(१) का॰ छन्दस्यास्तिस्रोऽनुक्रान्तेषु पुरस्ताद्गायत्रीरग्निर्मूर्धेति प्रत्यृचम् २। वक्ष्यमाणा गायत्र्याद्याश्छन्दस्या एकैकस्मिन् स्थाने तिस्र उपदधाति तासां मध्यमा पश्चानूके तामभितो द्वे अर्धपद्ये अत पूर्वदिश्यनूकान्ते तिस्रो गायत्रीरग्निर्मूर्धेति प्रत्यृचम् एवं वक्ष्यमाणा अपीति सूत्रार्थः।

स्तुमः ॥ २१ ॥ त्वामग्ने पुष्करात् । व्याख्यातम् ॥ २२ ॥ (१) भुवोयज्ञस्य । त्रैष्टुभ स्त्र्यृचः । प्रथमा व्याख्याता ॥ २३ ॥ अबोध्यग्निः । योयमग्निः । अबोधिप्रतिबुध्यते कर्माणिस्वमधिकारम् । समिधासमिन्धनेन । जनानामग्नि होत्रीणां सत्त्रातिथिज्ञान श्रद्धासंपन्नानाम् ।

२२ ॥ भुवोयज्ञस्य ॥ भुवोयज्ञस्यरजसश्चनेतायत्रानियुद्भिःस चसेशिवाभिः ॥ दिविमूर्द्धानन्दधिषेस्वर्षाञ्जिह्वामग्नेचकृषेहव्यवाहम् ॥ २३ ॥ अबोध्यग्निः ॥ समिधाजनानाम्प्रतिधेनुमिवायतीमुषासम् ॥ यह्वाऽइवप्रवयामुज्जिहानाःप्रभानवःसिस्रतेनाकमच्छ ॥

कथमिव प्रतिबुध्यते । धेनुमिवायतीम् यथा धेनुमागच्छन्तीं वत्सः प्रतिबुध्यते । यथा च उषासमागच्छन्तीं मनुष्याः प्रतिबुध्यन्ते । तस्याहुतिभिर्दीप्तस्य । यह्वा इव प्रवयामुज्जिहानाः

(१) पुरस्ताचित्रिष्टु भो रेत सिग्वेलायां भुवो यज्ञस्येति १ पूर्वदिशि रेत सिग्वेलायां त्रिष्टुप्संज्ञा इष्टका उपदधाति यचेन तिस्रः त्रिष्टुप्छन्दस्काभिस्त्रिभिरुपधेया इष्टकास्त्रिष्टुभ एवमग्रेऽपि।

यह्व इति महतोनाम धेयम्। यथा महान्तो जातपत्ता पक्षिण: वयां वृक्षशाखामुज्जिहाना. परित्यजन्त: ऊर्द्ध्वं गच्छेयु। एवम्। प्रभानव: सिस्रते। प्रसिस्रते प्रसर्पन्तिभानव: अर्चींषिमहान्ति। नाकमच्छ। अच्छाभेराप्तुमितिशाकपूणि:। स्वर्गलोकमभि ॥ २४ ॥
अवोचाम। उद्गातारोब्रुवन्ति। अवोचामउक्तवन्तोवयम् कवयेक्रान्तदर्शनाय। मेधराय यज्ञि-

च्छं ॥ २४ ॥ अवोचामकवये ॥ अवोचामकवयेमेध्यायवचोवन्दारु वृषभायवृष्णे ॥ गविष्ठिरोनमसास्तोममग्नौदिवीवरुक्ममुरुव्यञ्चमश्रेत् ॥२५॥ अयमिह ॥ प्रथमोधायिधातृभिर्होतायजिष्ठोअध्वरे

याय। वच: स्तुतिलक्षणं वाक्यम् वन्दारुवन्दनशीलम। वृषभाय वर्षित्रे। आहुति परिणामाभिप्राय मेतत्। वृष्णे सेक्त्रे यूने परिणाम रहिताय। इदानीम् गविष्ठर: होता गवियाचिस्थिरोप्रच्याव्य:। तस्माद्धि अग्निरधिष्ठात्रीदेवता। नमसान्नेन संयुक्तं स्तोमंस्तुति:। अग्नौ आहवनीयाख्ये। अश्रेत् आसंजयिष्यति अग्नि संबद्धं करिष्यते। कथमिव। दिवी-

वस्थाम् । यथा द्युलोके रोचनमादित्यम् । उरुव्यञ्चम् बहुभिः स्तुतिभक्तिभिर्युताम् स्वरसौ-
ष्ठवादि युक्ताम् स्तोम आदित्येनोपमीयते ॥ २५ ॥ अयमिह । (१) जागतस्त्र्यचः । प्रथमाव्या-
ख्याता ॥ २६ ॥ जनस्य गोपाः । योयजनस्य यजमानस्य गोपाः गोपायिता अजनिष्टजातः

ष्पवीड्ग्र÷॥ यमप्नवानोभृगवोव्विरुरुचुर्व्वनेषुचित्वंव्विभ्वम्व्विशेविं
शे ॥ २६ ॥ जनंस्यगोपाऽ ॥ जनंस्यगोपाऽअंजनिष्टजागृविरग्निः
सुदर्त्वः सुवितायनव्व्यंसे ॥ घृतप्रतीकोबृहुता* दिविस्पृशांद्युमद्वि

जागृविः जागरणशीलः अग्निष्टजातः अग्निः । सुदक्षः शोभनोत्साहः । सुवितायनव्यसे ।
सुप्रभूताय कर्मणेनवतराय । सः घृत प्रतीकः घृतमुखः । बृहता महता भानुना । दिविस्पृशा ।
दिवस्पृशतीति दिविस्पृक् तेदिविस्पृशा । द्युमद्विभाति । द्युतिमद्विविधं दीप्यते । भरतेभ्यः

(१) का० जगतीय पश्चादयमिहेति १ । तिसृभि पयाद्रे त सिग्वे लाया तिसृो जगतीमत्र ध्रेष्टका दक्षिणामुख उपदधातीति सूत्रार्थ ।

* दिविस्पृशेतावमा॥ पथाका मनुसन्तनोतुपदस्यातिसुतस्येतरादिसूत्रेणनिपिध्यते प्रा० अ० ३ । सू० ८८ ।

ऋत्विग्भ्योर्थाय। शुचिः। वह्नन्यपि हवींषि भक्षन्नुच्छिष्टो नभवति। शोधकोवा। यद्वा। योसौयजमानस्य गोपायिता अजनिष्टभरतेभ्यः ऋषिभ्यः सकाशात्। ऋत्विग्यजमानेभ्यो वा। जागृविः अग्निः सुदक्षः सुप्रभूताय कर्मणे नवतराय। सोयं घृतमुखो महता भानुनादिविस्पृशा। द्युतिमद्विभाति। शुचिः शोचते ज्वलति कर्मणः। यद्वा। मनुष्यभ्यो

भातिभरतेभ्युःशुचिः ॥ २७ ॥ त्वामग्ने ॥ त्वामग्नेऽअङ्गिरसोगुहाहितमन्वविन्दञ्छिश्रियाणंवनेवने ॥ * सजायसेमथ्यमानः

विजायमानो मनुष्य सम्बन्धैर्दोषैर्नलिप्यते ॥ २७ ॥ त्वामग्ने। यंत्वाम् हेअग्ने अंगिरसः ऋषयः। गुहाहितं निगूढे प्रदेशेवस्थितम् अप्सु अग्निर्देवेभ्य उदक्रामत्सोपः प्राविशदिति त्येव मादिभिर्दानमस्य मन्त्रस्य। अन्वविन्दन् लब्धवन्तः। पुनरपि नष्टंसन्तम् शिश्रियाणं वनेवने षयस्थितम् ओषधि वनस्पतिषु। अन्वविन्दन्नङ्गिरस इति वर्तते सत्वमिदानीमपिजायसे

---

* स जायमेरावयरसद्दि तायांचअनेच व्यञ्जनेपरे सपदमव्यमीविसर्जनीयोलुप्यत इतिलोप। प्रा० अ० ३। सू० १६।

येरुद्रा अधिभूम्याम् भूम्यामुपरिस्थिताः । तेषांसहस्रयोजने अध्वनि अवस्थितानामनेनहविषा अवधन्वानितन्मसि । अवतन्मसि अवतनुमः अवतारयामः । धन्वानिधनूंषि ॥ ५४ ॥ अस्मिन्म-हति मध्यस्थानाः । अस्मिन्महतिअर्णवे अर्णःउदकनामसुपठितम् । वोमत्वर्थीयः । अर्णवति

तेषांᳫसहस्रयोजुनेवुधन्न्वांनितन्न्मसि ॥ ५४ ॥ अुस्मिन्न्मंहुति ॥ अुस्मिन्न्मंहुत्युर्णुवुन्तरिंक्षेभुवाऽअधिं ॥ तेषांᳫसहस्रयोजुनेवुधन्न्वांनितन्न्मसि ॥ ५५ ॥ नीलंग्ग्रीवाःशितिकण्ठाः ॥ नीलंग्ग्रीवाः शितिकण्ठादिवंᳫरुद्राऽउपंश्श्रिताः ॥ तेषांᳫसहस्रयोजुनेवुधन्न्वांनितन्न्मसि ॥ ५६ ॥ नीलंग्ग्रीवाःशितिकण्ठाः ॥ शुर्व्वाऽअुधःक्षमा

अन्तरिक्षेभवारुद्राः । अधिउपरिस्थिताःयेतेषामितिकृत व्याख्यानम् ॥ ५५ ॥ नीलग्रीवा । रुद्राणाउच्यन्ते । नीलग्रीवाः । कृष्णवचनोनीलशब्दः । शितिकण्ठाः शितिशब्दः श्वेतवचनः । दिवंद्युलोकम् रुद्राउपश्रिताः अधिष्ठिताः अध्याश्रिताःयेतेषामित्युक्तम् ॥५६॥ नीलग्रीवाः । पृथिव्या

अधोयेरुद्रास्तउच्यन्ते । नीलग्रीवाः शितिकण्ठाः सर्वोरुद्राः अधःक्षमाचरः अधःपृथिव्यां सञ्चरन्ति येतेषामिति कृतव्याख्यानम् ॥ ५७ ॥ येव्वृक्षेषु । आसते शष्पिञ्जराः शष्पिञ्जरवर्णाः । नवप्ररूढानि तृणानियत्प शब्देनोच्यन्ते । नीलग्रीवाःविलोहिताः विगतकलुषभावाः । विविधंशालोहिता

चुराः ॥ तेषांᳫंसहस्रयोजनेवधन्वानितन्मसि ॥ ५७ ॥ येव्वृक्षेषुं ॥ शुष्पिञ्जंरानीलंग्रीवाव्विलोंहिताः ॥ तेषांᳫंसहस्रयोजनेवधन्वानितन्मसि ॥ ५८ ॥ येभूतानांम् ॥ येभूतानामधिंपतयोव्विशिखासंःकपुर्दिनंः ॥ तेषांᳫंसहस्रयोजनेवधन्वानितन्मसि ॥५९॥

लोहितशब्देन वाघातशोलच्यन्ते । त्वग्लोहितमज्जादि विमुक्तेत्यर्थः । तेषामित्युक्तम् ॥ ५८ ॥ येभूतानां । प्राणिनामधिपतयःईश्वराः विशिखासः । विशिखाएवविविशिखासः । सर्वमुण्डाइत्यर्थः । कपर्दिनःजटिलाः तेषामित्युक्तम् ॥ ५९ ॥ येपथाम् येरुद्राः पथांमार्गाणाम् अधिपतयइतिशेषः ।

येचपथिरक्षयः । पन्थानं येरक्षन्ति । ऐलवृदाः इलानामन्नानां समूहऐलम् तत् येबिभ्रति तेऐलभृतः संतोपि परोक्षवृत्तिनाशब्देन ऐलवृदाइत्युच्यन्ते। आयुर्युधः आयुर्जीवनं प्राणीकृत्य येयुध्यन्तिते आयुर्युधः चौरादयोवा रुद्रावा । तेषामित्युक्तम् ॥ ६० ॥ येतीर्थानि । येरुद्राः

येपथाम्पथि ॥ येपथाम्पथिरक्षंयऽऐलबृदाऽआयुर्युधः॥ तेषांꣳसहस्र योजनेवधन्वानितन्मसि ॥ ६० ॥ येतीर्थानि ॥ प्रचरन्तिसृकाहस्तानिषङ्गिणः ॥ तेषांꣳसहस्रयोजनेवधन्वानितन्मसि ॥६१॥ येन्नेषु ॥ विविध्यन्तिपात्रेषुपिबतोजनान् ॥ तेषांꣳसहस्रयोजनेव

तीर्थानि प्रयागप्रभृतीनि। प्रचरन्ति सृकाहस्ताः सृकाइत्यायुधनाम। आयुधहस्ताः निषङ्गिनःखड्गिनः। तेषामित्युक्तम् ॥ ६१ ॥ येन्नेषु। येअन्नेषु अवस्थिताः विविध्यन्तिअतिशयेनविध्यन्ति ताडयन्ति । येषामयमधिकारः अन्नस्यभक्षयितारो व्याधिमिग्रहीतव्याइति। पात्रेषु । व्यवस्थिताः पिबतोजनान्

येऽनिविध्यन्ति तेषामित्युक्तम् ॥ ६२ ॥ यएतावन्तश्च । येरुद्राएतावन्तश्च भूयांसश्च बहुतरा स्तेभ्यः । दिशः रुद्राः वितस्थिरे निष्ठयास्थिताः तेषामित्युक्तम् ॥ ६३ ॥ इतउत्तरन्त्रीणियजूंषि त्रिस्थानाश्चरुद्राः स्तूयन्ते। नमोस्तु। नमः अस्तुरुद्रेभ्यः येदिविद्युलोकेस्थिताः येषांरुद्राणां

धन्न्वानितन्न्मसि ॥ ६२ ॥ यऽएतावन्तः ॥ यऽएतावन्तश्श्चभूयाᳬंसश्चदिशोरुद्राव्वितस्त्थिरे ॥ तेषाᳬंसहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ६३ ॥ नमोस्तु ॥ रुद्रेब्भ्योयेदिवियेषांव्वर्षमिषवः ॥ तेब्भ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः ॥ तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्चनोद्वेष्टितमे

वर्षंवृष्टिः इषवइषवः आयुधस्थानीयम् तेभ्योरुद्रेभ्यः दशप्राची अंगुलीःकरोमिनमस्कारार्थम् इतिसर्वत्रसंबध्यते दशदक्षिणा दशप्रतीचीः दशउदीचीः दशऊर्ध्वाः । तेभ्यः नमःअस्तुते

नः अस्मान् अवन्तुरक्षन्तु तेनः अस्मान् मृडयन्तुसुखयन्तु । तेचसंतर्पिताः सन्तः यंपुरुषंद्विष्मः

षाञ्जम्भेदध्मः ॥ ६४ ॥ *नमोस्तु ॥ रुद्रेभ्योयेन्तरिक्षेयेषांवातऽ

इषवः ॥ तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशो

र्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडन्तुतेयन्द्विष्मोयश्च

नोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६५ ॥ *नमोस्तु ॥ रुद्रेभ्योयेपृथि

यश्चनः अस्मान् द्वेष्टि । तन्तेषांरुद्राणां जम्भेमुखेदध्मः । यद्वा । तेरुद्रा वयं चयंद्विष्मः

---

* येऽन्तरिक्षे रुद्रा वर्तन्ते तेभ्यो रुद्रेभ्यो नमोऽस्तु । येषां रुद्राणां वात इषवः वायुरायुधस्थानीयः कुवातेनान्नं विनाश्य वातरोगं वोत्पाद्य जनान् घ्नन्ति तेभ्यो ऽन्तरिक्षस्थेभ्यो वातेभ्यो रुद्रेभ्यो नमोऽस्तु शिष्टं व्याख्यातम् ।

* ये पृथिव्यां रुद्रा वर्तन्ते तेषामन्नमिषवः अन्नमदनीयं वस्तु आयुधम् अयथान्नभक्षणे कदन्नभक्षणे चौर्ये वा प्रवर्त्य रोगमुत्पाद्य जनान् घ्नन्ति तेभ्यः पृथिवीस्थेभ्योऽन्नायुधेभ्यो रुद्रेभ्यो नमोऽस्तु । तेऽस्मानवन्त्वित्यादि पूर्ववत् एते प्रतावरोहमन्त्राः अथ प्रत्यवरोहान् जुहोतीति व्यवहाराय सञ्ज्ञाकरणम् ।

यश्चन: द्वेष्टि। तमेषांरुद्राणां जम्भेदध्म: । समंजसमेव ॥ ६४ ॥ द्वे कण्डिकेउक्तार्थे ॥ ६५ ॥ ६६ ॥

व्व्यांव्येषामन्नमिषवं ॥ तेब्भ्योदशप्प्राचीर्द्दशंदक्षिणादशंप्प्रतीची

र्द्दशोदीचीर्द्दशोद्ध्वा: ॥ तेब्भ्योनमो ऽअस्तुतेनोवन्तुतेनोमृडय

न्तुतेयन्द्विष्म्मोयश्चनोद्द्वेष्टितमेषाञ्जम्भेदध्म: ॥ ६६ ॥ [ २० ]

इतिवाजसनेयसंहितायां *दीर्घपाठेषोडशोध्याय: १६ ॥

इतिउव्वटकृतौ मन्त्रभाष्ये षोडशोध्याय: १६ ॥

---

* पदाद्यस्य संयुक्ताकारस्येषद्दीर्घता च भवति। असार्थ: अकारस्य ईषद्दीर्घता भवति ईषद्दीर्घोऽप्युच्चारणं कर्त्तव्यम् अग्म्मन्नूर्ज्जम् इतात्र मा भूत आह संयुक्तेति। अत्रापि संयुक्तशब्देन योग व्यञ्जनयुक्तस्येतार्थ:। व्यायव्स्येतात्र मध्यमवकारान्तर्गताकारस्य मा भूदत आह पदाद्यस्येति। विव्भ्राडितात्र मा भूदत आद्याकारस्येति। यथा व्वसो: पवित्त्रम्। अत्र वकारपकारयोरीषद्दीर्घोच्चारणं यथाभवति तथा पठनीयम्। एवं परमेष्ठितयादिषु ज्ञेयम्। अत एवाध्यायसमाप्तौ संहिताया दीर्घपाठे इति सम्प्रदायविदो लिखन्ति।

(१) अग्निंपरिषिञ्चति । (२) अश्मन्नूर्ज्जम् । यजुर्मारुतम् । तान्नइषमूर्जंधत्तेति तदःश्रवणाद्य-दोत्राध्याहारः कर्तव्यः याअश्मन्अश्मनवतिमेघे ऊर्जमुदकलक्षणम् शिश्रियाणाम् आश्रिताम्

* अश्मन्नूर्जम् ॥ अश्मन्नूर्ज्जम्पर्व्वतेशिश्रियाणामद्भ्यऽओषधीभ्योव्वनस्पतिभ्योऽअधिसम्भृतम्पयः ॥ तान्नऽइषमूर्ज्जन्धत्त

याचपर्वते पर्वतवति मेघे । शिश्रियाणामाश्रिता उदकलक्षणोवायाच अद्भ्यःअधिसकाशात् ओषधीभ्यःअधिसकाशात् वनस्पतिभ्यःअधिसकाशात् । संभृतंपयः । संभृता पयोलक्षणागो-

(१) षोडशेऽध्याये शतरुद्रियहोम उक्तः सप्तदशे चितापरिषेकादिमन्त्रा उच्यन्ते ।

(२) का० चितां परिषिञ्चता ग्नीद्चिणे निकषेऽदि कृत्वाश्मन्नूर्जमितादृ रधि पश्चस्यापरसन्धि काचस्तस्य समीप निकषं दक्षिणपक्षापरसन्धिसमीप आत्मभागेऽश्मान निधायोदकुम्भमादायाद्रं रारभ्य सपक्षपुच्छमग्निं प्रदक्षिणं जलधारया समन्तादग्नौ त्रिःसिञ्चतीतार्थः ।

* अश्मन्नूर्जंदशनमस्ते पञ्चाग्निस्त्रिर्मिननवपञ्चुप पिताष्टावाष्टु त्रिशाम सप्तदशोदेनत्रमध्यमाग्निनापञ्चदशवौशुक्रज्योति मसोमर्ठ० स्तनवयोदशनवंकोनयतं ।

द्वारेण । गौर्हि अपःपिबति ओषधिवनस्पत्यादीन् खादति अथपयोजायते । तान्नइ पम्नउं धत । तामेतामुभयरूपाम् मेघसम्भवामुदकलक्षणां गोप्रभवांच पयोलक्षणां नःअस्मभ्यम् इषम् ऊर्ज्जम् धत्तदत्त हेमरुतः । मरुतोह्वैवर्षस्येशते । संरराणाः संरममाणाः । अश्मनिकुम्भंस्थापयति

मरुतःसंरराणाऽअश्मँस्तेक्षुन्मयितऽऊर्ग्यन्द्विष्मस्तन्तेशुगृच्छतु ॥ १ ॥ इमामे॥ऽअग्नऽइष्टकाधेनवःसन्त्वेकाचदशचदशचशत

(१) अश्मंस्तेक्षुत् । अश्मन् तेतव क्षुत् अशनायाअस्तु । आदत्तेकुम्भम् मयितऊर्क् । तवसंबन्धिनी-ऊर्क्मयि अस्त्वितिशेषः । कुम्भं प्रक्षिपति । (२) यंद्विष्मस्तंतेशुगृच्छतु यंपुरुषं द्विष्मः तन्तवसंबन्धिनी शुकशोकः ऋच्छतुगच्छतु ॥ १ ॥ (३) इमामे । द्वाभ्यांकण्डिकाभ्यां सन्निमभिमृश्यइष्टकाः धेनूःकुरुते ।

(१) का० अश्म स्ते क्षु दितिअद्रो कुम्भ कृत्वा मयि त ऊर्गितमादायैव हिरपरम् सेकान्तेऽश्मनि कुम्भमश्म स्ते क्षु दिति नि-धाय मयि त इति पुनरादाय पुनर्द्विवारम् परिपिर्ष्टितार्थ ।

(२) का० कुम्भेद्रि कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ तिष्ठन्दक्षिणस्यां निरस्यति यं द्विष्म इति। तं पाषाणं कुम्भे कृत्वा दक्षिणवेदिश्रोणौ पूर्वमुखस्तिष्ठन्दक्षिणस्यां दिशि साश्मानं घटं निरसातीतार्थ ।

(३) का० अनपेक्षमेत्योदङ् प्राङ् तिष्ठन्नाग्नेन उपरि पाषणान्त जपतीमा म इति। कुम्भनिरसनानन्तरमपश्यन्नेत्य दक्षिण-

तन्मप्रथमंयजुः । द्वितीयाष्टहतीवा पंक्तिर्वा । अग्निस्त्वासांधेनुकरणस्येष्ट इत्यग्निरुच्यते इमाः मेमम हेअग्नेइष्टकाधेनवः । धेनुरिवोपजीवनीयाः । सन्तुअस्मिंल्लोकइतिशेषः किंसंख्यकाः । एका-चदशच। शतञ्च सहस्रञ्च सहस्रंचायुतञ्च अयुतञ्चनियुतञ्चनियुतञ्चप्रयुतञ्च। अर्बुदञ्चन्यर्बुदंच। समुद्रश्च । मध्यञ्च। अन्तञ्च। परार्द्धश्च । एवमेकाप्रभृति दशसंख्यागुणितं परार्द्धपरार्द्धपर्यन्तं

ञ्चशुत ञ्चंसुहस्रञ्चसहस्रंञ्चायुतंञ्चायुतंञ्चनियुतंञ्चनियुतंञ्चप्रयुतञ्चा र्बुदञ्चन्यर्बुदञ्चसमुद्रश्चमध्यञ्चान्तश्चपरार्द्धश्चचैतामेऽअग्नऽ इष्टकाधेनवःसन्त्वमुत्रामुष्मिँल्लोके ॥ २ ॥ ऋतवंस्त्थ ॥ ऽऋतावृधं

पूर्वोक्तसंख्याविशेष सम्बन्धितं वर्द्धमानसंख्येयनिष्ठं संख्याजातमभिधाय । अग्निमाह । एता-मेमम हेअग्ने इष्टकाःधेनवःमन्तु । असुत्रअमुष्मिन् लोके अमुत्रेतिजन्मान्तरनिर्देशः । अमु-ष्मिन्लोक इतोऽष्टलोकनिर्देशः ॥ २ ॥ ऋतवस्स्थ । यायूयम् ऋतवःस्थ ऋतावृधः । ऋतवोभवथ

वेदिश्रोणि समीपे दयानाभिमुखस्ति ष्ठन्नासन उपरि हस्तौ प्रसार्य यावत् स्पृष्टेमा म इति कण्डिकाद्वयं स्वरेण जपतीतार्थः ।

सत्यश्चर्द्ध यिच्यश्च । ऋतुष्ठाश्च । ऋतुपुतिष्ठन्तीतिऋतुष्ठाः स्थभवथ । ऋतावृधः अतिशया-र्थपुनर्वचनम् । ताघृतश्चुतः मधुश्चुतःसत्यः । घृतंयाश्चोतन्तिताघृतश्चुतः मधुश्चुतश्चसत्यः । विराजोनाम नाम्नाचविराजइतिख्याताः सत्यःदृश्लोकंघृता उपधीयन्ते तदभिप्रायमेतन्नामकरणम् । कामदुघाः । कामानांदोग्ध्र्यो भवथ । अक्षीयमाणाः परिपूर्य्यमाणाः ॥ २ ॥ अग्निक्षेत्रं

ऽऋतुष्ठास्थंऽऋतावृधंः ॥ घृतश्चुतोंमधुश्चुतोंव्विराजोनामंकामुदुघाऽअक्षीयमाणाः ॥ ३ ॥ समुद्रस्यंत्वा ॥ समुद्रस्यत्वावकयाग्नेपरिंव्ययामसि ॥ पावकोऽअस्मभ्यंᳬशिवोभंव ॥ ४ ॥ हिमस्यंत्वा ॥ ज

सप्तभिर्ऋग्भि विकर्षतिआग्नेयीभिः । तत्राद्येगायत्र्यौ (१) समुद्रस्यत्वा । हेअग्ने यंत्त्वांसमुद्रस्य-मुन्दनस्य उदकस्य । अवकयापरिव्ययामसि अवकयाअवकाशेन परिव्ययामः । सत्वंपरिवीतःसन् पावकःपावयिता अस्मभ्यंशिवःशान्तःभव ॥ ४ ॥ हिमस्यत्वा । त्वांहिमस्य जरायुणा । यो-

(१) का० मण्डूकावकावेतसशाखा वेणौ बद्धावकर्षति मन्त्रस्त्वष्टरसमुद्रस्य त्वेति प्रत्यृचम् । मण्डूकशैवालवेतसतरुशाखा वंशे बद्धात हस्तेनादायाग्निचेत प्रत्यृच कर्षति तेनेतार्थ ।

तस्मयौतेन हेअग्ने । परिव्ययामसि परिवेष्टयामः । सर्वंपरिवीतःसन् पावकःअस्मभ्यंशिवोभव ॥ ५ ॥ उपज्मन् । जगतीवा त्रिष्टुब्वा । उपज्मन् उपावतरज्मन् जसतेन माष्टथिवी पृथिव्याम् उपवेतसे । उपावतरच्चवेतसेवेतसशाखायाम् मण्डूकाच वेतसशाखा स्तव वद्वाभवन्तिवंशे तदयंमंत्रोभिवदति नदीष्वा । आउपसर्गोऽधयर्थे । अवतरच्चनदीषु । अधिशब्देनावलक्षणया

रायुणाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्यंᳪशिवोभव ॥ ५ ॥ उपज्मन् ॥ उपज्मन्नुपवेतसेवतरनदीष्वा ॥ अग्नेपित्तमपामसि मण्डूकिताभिरागहिसेमन्नोयज्ञम्पावकवर्णᳪशिवङ्कृधि ॥६॥ अपा

अवका उच्यन्ते तत्प्रभवत्वात् । कस्मात्त्वमेव सखाभिः प्रार्थ्यसेइत्यतआह । हेअग्ने पित्तन् अपाम्असि । योयस्यावयवभूतो भवति नसतद्विनश्ति तद्धर्माचभवति । एवमग्निंसंबोध्य अथेदानींमण्डूकीमाह । हेमण्डूकि ताभिरद्भिः सहितागायाहि । यासामग्निःपित्तम् । याभिर्वासहत्वमुत्पन्ना । याचत्वमग्निः शान्त्यर्थमितश्चेतश्चनीयसे । सात्वं नःअस्माकम् यज्ञं

चयनलक्षणम् पावकवर्णम् अग्निवर्णम् शिवंशान्तम् । कृधिकुरु ॥ ६ ॥ अपामिदम् । वृहती । अपामिदम् । न्ययनम् नितरामयनम् । यद्वेतन्मण्डूका वेतसशाखाक्षणम् समुद्रस्यउदकनिधेः निवेशनम् निविशन्तेअस्मिन्नितिनिवेशनम् । यतएवम् अतोब्रवीमि अन्यान्मुरुपान् तेतवअस्मत्

मिदम् ॥ अपामिदन्न्ययनᳫंसमुद्रस्यनिवेशनम् ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतयःपावकोऽअस्मभ्यᳫंशिवोभव ॥ ७ ॥ अग्नेपावक ॥ रोचिषामन्द्रयादेवजिह्वया ॥ आदेवान्वक्षियक्षिच ॥ ८ ॥ सनःपाव

तपन्तु दहन्तु । हे तव: अस्त्राणि अर्चींषि । त्वंचपावकः पावयिताम नः अस्मभ्यं शिवोभव ॥ ७ ॥ (१) अग्नेपावक । द्वेगायत्र्यौ । हेअग्नेपावक पावयितः । रोचिषा रोचनेन ज्वालासमूहेन । आहवनीयात्मनास्थिताद्भुतिशेषः । मन्द्रयाच । मदनीययाच हे

(१) का० पक्षपुच्छानि चाभ्यात्ममग्नेपावक रोचिषेति पक्षपुच्छानिप्रान्तादारभ्यात्ममात्मसमुखं सन्निपर्यन्तं कर्षति मतृपमग्ने इति दक्षिण पक्ष स न इति पुच्छ पावकयेतुत्तर पक्षसितार्थं ।

देवजिह्वया होतृत्वेनावस्थितइति शेषः । आदेवान्वक्षि जक्षिचदेवान् उक्षिच आह्वदेवान् यजचेति । होत्रग्नेरकारोहोतश्च आहवनीयरूपेणहवि र्वहणश्च अतएवंस्तूयते ॥ ८ ॥ सनः पावक । यस्त्वमुक्ताधिकारः सनःअस्माकं हेपावकपावयितः । दीदिवः दीप्तिमन् हेअग्नेदेवान् इहआवह । उपयज्ञम यज्ञस्यसमीपम् ततोनन्तरं हविस्नः संबन्धि । देवान्आ-

कदीदिवोऽग्नेदेवाꣳ ॥ इहावह ॥ *उपयज्ञꣳहविश्च नः ॥९॥ पा

वकयायः ॥ पावकयायश्चितयन्त्याकृपाक्षामन्रुरुचउषसोनभा

पयेतिशेषः ॥ ९ ॥ पावकया । जगती । पावकया पावयित्र्या योग्निः चितयन्त्या परि-दृढकारिण्या कृपासमर्थया । कृपूसामर्थ्ये अस्माद्विपित्टतीया । क्षामन् पृथिव्याम् । क्षामेतिपृथिवीनाम । रुरुचेदीप्यते । उषसोनभानुना । उषसइवज्योतिषा । यश्च । तूर्वन्नयामन् । त्वरमाणइवआधानकर्मणि । यामशब्दः कर्मवचनः । एतशस्यआज्यस्य । नअन-

● यद्यपि उपसर्गरिपरस्य यकारस्यन जकारोच्चारणम् । दृश्यास्तौ तथापि उपयज्ञ मित्यत्र चवर्गतृतीयोच्चारणं कर्त्तव्यमत एवमंगलतयर्ण रत्न प्रदीपिकायां प्रतिपादितम् । अनु योजान्विन्द्र. ते तु उप यज्ञं तथा विना ।

र्थकः। रणेरमणीयेपदे। आधीयते। अध्वर्युणाआहितस्त्वयः दृघेन। दृणिरितिदीप्तिनाम नहत्यनर्थकः। तत्पायाः त्वयम् पिपासुः पूर्णाङ्कतिम् पूर्णाङ्कत्याहितं ततसमयन्ति। मोत्त्वाच अजरः संपाद्यते। तमवकादिभिः शमयामइतिशेषः ॥ १० ॥ (१) नमस्ते। चित्यारोहिणी।

नुनां ॥ तूर्व्वन्नयामुन्नेतंश्रस्युनूरणऽआयोघृणेनतंत्त्पाणोऽअजरं ॥ १० ॥ [ १० ] नमस्ते ॥ नमस्तेहरसेशोचिषे नमस्तेऽअस्त्वर्च्चिषे ॥ अन्न्याँस्तेऽअस्मत्तंपन्तुहेतयं पावकोऽअस्मभ्यंᳺ शिवोभंव ॥ ११॥ नृषदेव्वेट् ॥ नृषदेव्वेडप्सुषदेव्वेड्बर्हिषदेव्वेड्वनसदेव्वेट्स्वर्व्विदेव्वे

इत्याग्नेयी। नमः तवहरसेच। शाचिषेच। नमः तेअस्तु अर्चिषेच। हरतेहरः। शोचते। शोचिः। अन्याँस्तइतिव्याख्यातम् ॥ ११ ॥ स्वयमातृण्णायां जुहोतिपञ्चभि र्यजु-

(१) का० उभयमादाय चितारोहणं नमस्त इति हिरण्मयकलसहित स्रुक्स्थमाज्यम् दधिमधुघृतकुशमुष्टियुता पात्रो एतद्‌द्वय मादाध्वर्य्युयतोग्निमारोहति वब्रयजमानो तु अग्नेर्दक्षिणत उपविशत इत्यर्थः।

मिराग्नेये: । (१) नृपदेवेट् । नृषुमनुष्येषु सीदतीतिनृषत् तस्मैनृषदे। वेडितिपरोक्षं वषट्कार: । अप्सु उदकेसीदतिअप्सुषत् तस्मै अप्सुषदे । बर्हिषदे । ओषधयोवैबर्हि: । वनसदे । वनंवृक्षसमूह: । स्वर्विदे । स्व: शब्दोऽव्ययम् द्युलोकादित्यवचन: । विद्यतेरलुग्गवर्णां सीदति

ट् ॥१२॥ येदेवा ॥ येदेवादेवानांयज्ञियायज्ञियानाᳬसंवत्सरीणमुपभागमासते॥ अहुतादोहविषोयज्ञेऽअस्मिन्त्स्वयम्पिबन्तुमधुं

नार्यसंनिकर्षात् । स्वरादित्यविद्यतेयोग्नि: तस्मैस्वर्विदे ॥ १२ ॥ दधिमधुघृतेनाग्निं प्रोक्षति । द्वाभ्यांदैवीभ्यां जगतीभ्याम् । (२) येदेवा: प्राणा: । देवानामुत्कृष्टा: । यज्ञियायज्ञियानाम् यज्ञार्हा: यज्ञियानाम् अतिशयार्थम्पुनर्वचनम् । संवत्सरीणम् संवत्सरेण प्राप्यतइति संवत्सरीणोभाग: ।

(१) का॰ स्वयमातृण्णायां पञ्चगृहीतं जुहोति नाभिवद्धिरण्यादर्शनं च नृषदे वेडिति प्रतिमन्त्रम् आरुह्य स्वयमातृण्णायां पञ्चगृहीतं जुहोति पञ्चमन्त्रैः नाभिवदिति दक्षिणश्रोण्युत्तरांसमध्येषु तत्र हिरण्यं पश्यन्नितरास्ति यदव नेतरार्थं ।

(२) का॰ समासिक्तान् कुशैः प्रोक्षति सपरिश्रित्क वाङ्गेन च ये देवा इति पावरा सिक्तान्दधिमधुघृतान् कुशैः परिश्रित्य चित सपक्षपुच्छमग्निं मध्ये वहिश्च प्रोक्षति ऋचम् द्वयेनेतरार्थं ।

संवत्सरं हित्वा ग्निश्चीयते। उपभागमामते। उपासतेभागम्। अहुतादः अन्येदेवाअग्निप्रा-
प्रामाहुतिमदन्ति प्राणास्तुसाक्षादन्नमदन्ति। हविषः स्वमंशम् यज्ञेअस्मिन्स्वयंपिबन्तु। मधुनो
घृतस्यदधश्चेतिशेषः॥ १३॥ येदेवादेवेषु अधिउपरि अधिष्ठातृत्वेन। देवत्वं देवभावम उपायन्
उपगताः। येब्रह्मणः पुरएतारोऽस्य येचब्रह्मणः अयमग्निर्ब्रह्म तस्यैतेपुरएतारइतिश्रुतिः।

नोघृतस्यं ॥१३॥ येदेवाः ॥ येदेवादेवेष्वधिदेवत्वमायन्येब्रह्मणः पुरऽएतारोऽअस्य ॥ येभ्योनऽऋतेपवतेधामकिञ्चननतेदिवोनपृथिव्याऽअधिस्नुषु ॥१४॥ प्राणदाऽअपानदाः ॥ प्राणदाऽअपानदाव्यान

प्राणाश्चप्राणिनः पुरएतारएव। येभ्यश्चप्राणेभ्य नक्षतिवियोगे। पवते। वर्त्तते। धामस्थानं-
जन्मवा। किञ्चन। नकिञ्चिदपीत्यभिप्रायः प्रदूत्यभूताः प्राणादेवाः क्वपुनस्तआसते। नते-
दिवः। द्युलोकस्याश्रयणीयेषु प्रदेशेषु। नचपृथिव्याः आश्रयणीयेषु प्रदेशेषूपलभ्यन्ते अधि-
स्नुषु स्नुप्रस्रवणे। प्रस्रावीणिस्रोतांसि चक्षुरादीनिप्राणायतनानि तेषूपलभ्यन्ते। सहितेषां

विशिष्टःप्रदेशः ॥ १४ ॥ अवरोहति । (१) प्राणदाः * आग्नेयाष्टहतीपंक्तिर्वा । यस्त्वंप्राणदाः अपानदाःव्यानदा । वर्चोदाःअन्नस्यदातासि वरिवोदाः । वरिवोधनन्तस्यदातासि । तंत्वांब्रवीमि अन्यांस्तेअस्मदितिव्याख्यातम् ॥ १५ ॥ (२) पञ्चगृहीतंजुहोति । अग्निस्तिग्मेन । आग्नेयीगायत्री

दाव्वंर्च्चोदावरिवोदाः ॥ अन्न्यांस्तेऽअस्मत्तपन्तुहेतयःपावकोऽअस्म्मब्भ्यंशिवोभव ॥ १५ ॥ [५] अग्निस्तिग्मेन ॥ शोचिषायासद्विश्श्वन्न्यत्रिणम् ॥ अग्निन्नोव्वनतेरयिम् ॥ १६ ॥ यऽइमा ॥

अग्निःतिग्मेन तिग्मन्तेजतेक्ष्णाहकर्मणः । उसाहवता शोचिषादीप्त्या यासत् । यसउपक्षये । उपक्षयति । विश्वंसर्वन्न्यत्रिणम् नितरामत्रिणमत्तारंखादकम् उपद्रवकारिणम । अग्निश्चनःअस्मभ्यंवनते वनतिर्दानार्थः । ददाति रयिन्धनम् ॥ १६ ॥ षोडशगृहीतञ्जुहोति ।

(१) का० प्राणदा इतत्रवरोहति प्रोक्षणानन्तरमग्ने रवतरतीतरथ*

(२) का० पञ्चगृहीत जुहोतग्निस्तिग्मेनेत्यृचा शालायामागत्य पञ्चगृहीतमाज्यं शालाद्वार्येऽग्नौ जुहोति ।

* अग्निर्देवता बृहती पङ्क्तिर्वा अष्टत्रिंशदक्षरत्वात्पङ्क्तिस्तु ।

(१) यइमाविश्वा । पञ्चदशभिर्वैश्वकर्मणीभिस्त्रिष्टुभिः । कल्पान्तरीणं यजमानं ज्ञानकर्मसमुच्चयकारिणं विश्वकर्मभावमात्मत्वेनोपासकं तदुपासकत्वेनैवापक्षपितकल्मषं कल्पादावभिव्यज्यमानं धर्मज्ञानवैराग्यैश्वर्ययुक्तं सुप्तप्रतिबुद्धन्यायेनापरोक्षज्ञानमात्मत्वेनापगतः प्रजाःसृजमानामृषिः पश्यन्नाचष्टे यइमाविश्वाभुवनानिजुह्वदिति । यइमानिविश्वानिभुवनानि भूतजातानि, । आत्म-

विश्वाभुवनानिजुह्वदृषिर्होतान्यसीदत्पितानः ॥ सऽआशिषाद्रविणमिच्छमानः प्रथमच्छदवराँ२ ॥ आविवेश ॥ १७ ॥ किंस्वित्॥ किंस्विदासीदधिष्ठानमारम्भणङ्कतमत्स्वित्कथासीत् ॥ यतोभू

निजुह्वत् आत्मत्वेनपश्यन् । ऋषिःसाक्षात्कृतधर्मा । होताआह्वातादेवानांकल्पादौ न्यसीदत् निषण्णः । पितापातानःअस्मत्प्रभृतीनाम् । सएवऋषिर्मनुष्यादिभावमुपगतःसन् । यज्ञसन्निध्याआशिषा द्रविणंयज्ञफलम् इच्छमानः । प्रथमच्छत् प्रथमच्छादकः प्रथमोमूर्तशरीरग्राही अवरान् द्विपद्चतुष्पद्स्थावरादीन् । आविवेश आविष्टोविपरिणामतः ॥ १७ ॥ एवंविश्वकर्मा-

(१) का० षोडशगृहीतार्धमनुवाकशेषे । पञ्चगृहीतहोमानन्तरं षोडशगृहीतमाज्यं जुह्वां कृत्वा तस्यार्धमनुवाकशेषेण शालाद्वार्ये एव जुहोति । अनुवाकशेषश्च इमा विश्वेत्यारभ्य चिदृध्यो ययासदित्यन्ताऽष्टर्चं इत्यर्थः ।

दैतमुक्ता अथेदानींयथाजगत्सृजति तत्प्रश्नप्रतिप्रश्नाभ्यामाह । किंस्वित् । स्वित्वितर्कं किंपुनरासीत् अधिष्ठानम् । अधितिष्ठन्त्यस्मिन्नित्यधिष्ठान मधिकरणंविश्वकर्मणो द्यावा पृथि-व्यौसृजतः अधिष्ठानरहिताद्इदानींजनाः कर्तारोनकिञ्चिदपिकुर्वाणादृश्यन्ते । आरम्भणंकतम-त्स्वित् आरभ्यतेऽस्मात् । इत्यारम्भणंप्रकृतिद्रव्यम् मृद्द्रव्यमिवघटादीनांकथमासीत् । कथासीत् कथंभूताच तत्क्रियाऽऽसीत् । चक्रसूत्रसलिलादिभिर्हिघटादयोनिष्पद्यन्ते । यतोभूमिंजनयन्वि-

**मिंद्यामौर्णोन्महिनाविश्वचक्षाः ॥ १८ ॥**

**विश्वतश्चक्षुरुत ॥ विश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पा**

श्वकर्मा यतोयदेत्यर्थः । यथाभूमिंद्याञ्चजनयन् विश्वकर्माविद्यामौर्णोत् औणोत् । ऊर्णुञ् आच्छादने । आच्छादितवान् । द्यांपृथिवींचेत्यध्याहारः । महिनामहाभाग्येनऐश्वर्येण । विश्व-चक्षाःसर्वतोदर्शनः अतीतानागतवर्तमानकालानांयुगपत्ज्ञाता ॥ १८ ॥ अत्रोत्तरंददाति । विश्वतश्चक्षुः सर्वतःचक्षुः उतविश्वतोमुखः । अपिच सर्वतोमुखः विश्वतोबाहुः । उतविश्वतस्पात् अपिचसर्वतःपादः । संधमतिबाहुभ्याम् धमतिर्गत्यर्थः । संगमयतिबाहुभ्यांसंगच्छतेवा । संपतत्रैः

संगच्छतेपतत्रै:पक्षि: । ऐश्वर्ययोगाद्दवोपिपादा.संभवन्ति । द्यावाभूमीजनयन्देव.एक: । अद्वि-तीय: ॥ १९ ॥ किंस्वित् । अयमपिमन्त्र:प्रश्नरूपेण किंपुन स्तद्वनं कश्चसदृक्ष:आसञ्चभून् । यत:द्यावा पृथिवी नि:ततक्षु: तक्षति:करोतिकर्मा । बहुवचनम्पूजार्थम् यस्मात्वृक्षात् द्यांच-पृथिवींच निष्कृर्यचकार । यदिहिवनं वृक्षोवाभवेत् तदा एवमप्याशंकेत् । तद्यथोहि इ-

त् ॥ सम्बाहुभ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥१९॥
किंस्विद्वनङ्कऽउसवृक्षऽआसयतोद्यावापृथिवीनिष्टतक्षुः ॥ मनीषिणोमनसापृच्छतेदुतद्यदध्यतिष्ठद्भुवनानिधारयं

द्याञ्चमसादीन् निष्कर्षयन्ति अयन्त्वात्मारंभण ऊर्णनाभिवदित्यभिप्राय: । विस्मितश्चद्वितीयंप्रश्नङ्करोति । हेमनीषिणोमेधाविन: मनसापर्यालोच्यपृच्छत । इत्उ'तत् एतदपीतिपद-त्रयस्यार्थ: । यदत्रयदर्थ: । यदिअध्यतिष्ठत् यत्भुवनानिभूतजातानि सहद्यावापृथिवीभ्यांधारयन्

उपरिष्टादास्ते ॥ २० ॥ यातेयानितेतवधामानि । स्थानानि परमाणिउत्कृष्टानि । यावमा यानिचावमानि कनीयांसि । यामध्यमा । यानिचमध्यमानि । हे विश्वकर्मन् । उतेमा । अपिचइमानियानि प्रत्यक्षउपलभ्यन्ते । तेभ्योद्रव्यमुपादाय शिक्षासखिभ्योदेहि । समानख्यानेभ्यो यजमानेभ्यः । हविरपिअभ्युद्यति हे स्वधावःअन्नवन् कउपकारइतिचेत्। नोत्पहे वक्तुमहं त्वां

न॥२०॥याते॥ यातेधामानिपरमाणियावमायामध्यमाव्विश्वकर्म्मन्नुतेमा ॥ शिक्षासखिभ्योहविषिस्वधावःस्वयंयजस्वतन्न्वंवृधानः ॥२१॥ व्विश्वकर्म्मन्हविषा ॥ व्वावृधानःस्वयंयजस्वपृथिवीमुत

यजइति । कोहिनाममनुष्यस्त्वांयष्टुं समर्थोतएवंब्रवीमि । स्वयंयजस्वतन्वंशरीरं वावृधानः वर्द्धयमानः ॥२१॥ विश्वकर्मन् हेविश्वकर्मन् मदीयेनहविषा वावृधानः वर्द्धयमानः उपसंजातहर्षः सन् मदीयेयज्ञे । स्वयमेवयजस्वमदनुग्रहाय पृथिवीम् । पृथिव्याश्रयाणिभूतानि । उतद्याम् । अपिचद्युलोकाश्रयाणिभूतानि किञ्च । त्वत्प्रसादादिनाऽस्माकं मुह्यन्तु । मोहमुपगच्छन्तु । अन्ये-

अभित अवस्थिताः सन्तः सपत्नाः परिपन्थिनः । किन्त्वत्प्रसादादेव इहअस्माकं मघवा-
घनवानिन्द्रः सूरिः पण्डितः अस्तु । आत्मज्ञानोपदेशकः ॥ २२ ॥ वाचस्पतिम् व्याख्या

ध्याम् ॥ मुह्यन्त्वन्न्येऽअभितःसपत्नाऽइहास्माकम्मघवासूरिरस्तु ॥
२२ ॥ व्वाचस्प्पतिम् ॥ व्वाचस्प्पतिंव्विश्श्वकर्म्माणमूतयेमनोजुवंव्वा
जेऽअद्याहुवेम ॥ सनोव्विश्श्वानिहवनानिजोषद्विश्श्वशम्भूरवसेसा
धुकर्म्मा ॥ २३ ॥ व्विश्श्वकर्म्मन्हविषा ॥ व्वर्द्धनेनत्त्रातारमिन्द्रमकृ
णोरवद्ध्यम् ॥ तस्म्मैव्विशःसमनमन्तपूर्व्वीरयमुग्ग्रोव्विहव्व्योयथास
त् ॥ २४ ॥ [ ९ ] चक्षुषःपिता ॥ मनसाहिधीरोघृतमेनेऽअजनन्न

तम् ॥ २३ ॥ विश्वकर्मन्हविषे त्यपिव्याख्यातम् ॥ २४ ॥ (१) चक्षुषः पिता । अलद्वितीयोद्वृचः प्रथमं

(१) का० चक्षुष पितेतिपरमनुवाकेन । यदर्चेन षोडशगृहीतस्यापरमर्धं जुहोतीत्यर्थः ।

व्याख्यायते । यच्छ ह्‌योगात् । यदोइंत् । इच्छ ह्‌एवार्थे । यदैत्रअन्त।अन्त।नितिद्वितीया । द्यावापृथिव्योः । अदृहन्त । दृंहतेरेतद्रूपम् । दृढोकृतवन्तः । के । येपूर्वेऋषयः वसिष्ठप्रभृतयः । आत् । अथेत्यर्थः । अथानन्तरम् द्याव।पृथिव्यौ अप्रथेताम् । पृथिव्यौअभूताम् ततोनन्तरम् । चक्षुषः पिता । चक्षुर्नामऋषिः । तस्यपिताप्राणः प्रजयाँस्सूयते । मनसा-

म्नंमाने ॥ युदेदन्ताऽअदंहन्तपूर्वऽआदिद्यावांपृथिवोऽअंप्रथेताम् ॥ २५ ॥ विश्वकंर्म्माविमनाऽ ॥ विश्वकर्म्माविमंनाऽआद्विहायाधाताविधातापरमोतसन्दृक् ॥ तेषामिष्टानिसमिषामंदन्ति * यत्रास

प्तऋषीन् । मनसाचधीमान् घृतमेनेअजनत् । घृतमुदकम् एने द्यावापृथिव्यौप्रति । अजनत् जगदनुग्रहाय । नम्नमाने नममाने च । विष्कम्भयन्नितिशेषः ॥ २५ ॥ विश्वकर्माविमनाः । विश्वभूतमनाः आत्‌विहाय । अपिचमहान्‌व्यापकः । धाताधारयिता । विधाताविदधातिऋ-

* यत्रासप्तेत्यत्र नरस्समऽऋषोवसुऽथाइति युक्षिष्युयत एतेषु प्रत्ययेषुयत्ने तार्यऋस्योदोर्घ मापद्यते इतिदोर्घ प्रा० अ० ३ मू० । १२२ ।

मांणि परमोतसंदृक् । परमञ्चमंद्रष्टा भूतानाम् तेषामिष्टानिहविषामदन्ति । येषांभूतानां विश्वकर्माद्रष्टा तेषांभूतानां मध्येयानिष्टानि अभिमतानिदमदानदयादिभिर्युक्तानि । तानिद्वपाश्वन्नेनआङ्गतिरसभूतेनसंमोदन्ते । सर्वद्वन्द्वविमुक्तानि भूतानिसंमोदन्ते । यत्रयस्मिन्प्रदेशेसप्तऋषीन् विश्वकर्मणःप्राणभूतान् वसिष्ठप्रभृतीन् । परःपरेणविश्वकर्मणा एकमाहुः एकं

प्तऽऋषीन्पुरऽएकमाहुः ॥ २६ ॥ योनः॥ पितार्जनितायोविधाता धामानिवेदभुवनानिविश्वा॥ योदेवानान्नामधाऽएकऽएवतᳬसम्प्रश्नम्भुवनायन्त्यन्या ॥ २७॥ तऽआयजन्तद्रविणᳬसमस्माऽऋषयः

भवति सच्चिसाध्यानांलोकः तेपिविश्वकर्मत्वंप्रार्थयन्ति ॥२६॥ योनः । योस्माकम् पितापाता जनिताजनयिता । यश्चविधाताविधारणसेतुः । यश्चधामानिस्थानानि वेदजातानि भुवनानिभूतजातानि विश्वाविश्वानि यश्चदेवानां नामधा नामानिदधातिकरोति । नामचपितैवकरोति यश्च एकएवअद्वितीयः । तंविश्वकर्माणं संप्रश्नयितुम् भुवनाभूतजानि । आयन्तिआगच्छन्ति

अन्याअन्यानिच सएवस्वाधिकारेषु नियुंक्तेत्यभिप्रायः ॥ २७ ॥ तआयजन्त । अत्रद्वितीयोर्द्धचः प्रथमंव्याख्यायते यच्छब्दयोगात् । असूर्तेअसुसमीरिते । असु:प्राणः सप्तदशकलिङ्गयुक्तावात्मानः मूर्तेसुष्टुसमीरिते रजस्यन्तरिक्षलोके । निषते निर्गतसत्ताके निरालंबने । निषक्तात्तप्रवृत्तंसूर्ते-त्य,दिना निपातनम् । यत्रस्थिता.सन्तः येभूतानिसमकृण्वन् कृतवन्तः इमानि । तेआयजन्त यजतिर्दानार्थः । आभिमुख्येनादत्तवन्तो द्रविणंधन मुदकलक्षणं जीवनाय । समस्मै । सं-

पूर्वैजरितारोनभूना ॥ असूर्ते सूर्ते रजसिनिषत्तेयेभूतानिसमकृण्वन्निमानि ॥ २८ ॥ परोदिवा ॥ परएनापृथिव्यापरोदेवेभिरसुरैर्य्

गयअस्मैभूतग्रामाय । ऋषय.पूर्वेवसिष्ठप्रभृतयः जरितारः । स्तोतारः । नभूना नात्यन्तंव-ऊयुक्ताकामवर्षित्वेनेत्यर्थः । येवसिष्ठादयो भूतानिसृजन्ति तएवोदकदानेन जीवन्तीति स-मस्तार्थः ॥ २८ ॥ परोदिवा । प्रश्नप्रतिप्रश्न रूपासंवाः । परब्रह्मविषयो अप्रश्नः विभक्ति व्यत्ययश्छन्दसोमंत्रः । परःसूक्ष्मः दिवादिवः परश्चएनाअस्याःपृथिव्याः । परश्चदेवेभ्य: परश्चअसुरेभ्यः यदस्ति । यच्चसदाकालमस्ति तत्परंब्रह्मेतिशेषः । किंस्वित् स्विच्छब्दोवितर्के । कंपुनर्गर्भम्

दर्भे धारितवत्य आपः। यत्र गर्भे देवाः संगताः प्रजापतिना अपश्यन्त दृष्टवन्तो जगदिदम् पूर्वे-प्रथमजाः। तदुक्तम् आपो ह्वा इदमग्ने सलिलमेवासेत्यादिना ॥ २८ ॥ तमित्। प्रतिप्रश्नः तमिद्गर्भं म् इच्छब्दो निपात आद्य र्थवचनः। तमाद्यं भूतं प्रथमं गर्भं दध्रे आपः। यत्र देवाः।

दस्ति ॥ कृ॒स्वि॒द्गर्भं॑ प्रथ॒मं द॑ध्र॒ऽआपो॒ * यत्र॑ दे॒वाः स॒मप॑श्यन्त पू॒र्वे ॥२८॥ तमित् ॥ तमि॒द्गर्भं॑ प्रथ॒मं द॑ध्र॒ऽआपो॒ यत्र॑ दे॒वाः स॒मग॑च्छन्त वि॒श्वे ॥ अ॒जस्य॒ नाभा॒वध्येक॒मर्पि॑तं॒ यस्मि॒न्विश्वा॑नि॒ भुव॑नानि त॒

समगच्छन्त संगताः विश्वेमवे। नन्वस्याण्डस्याद्भिसहितस्य क आधार इत्याशंक्याह। अजस्य नजायत इत्यजः। नाभौ मध्ये अधिउपरि। एकमविभक्त मनन्यभूतम्। अर्पितं समर्पितम्। यस्मिन्नजे ब्रह्मणि। विश्वानि भुवनानि। सर्वाणि भूतजातानि। तस्थुः स्थितवन्ति। ब्रह्मा-

* न यह चि छि स त योष्य स्वकम् एतेभ्य परस्तयन्द्रो नदिरुच्यते प्रातिशाख्ये अ० ६। सू० २७। इति निषेधात् तकारस्य द्वित्वम्।

गडाधितानि। नतुतस्याप्यन्यआधारइति स्वप्रतिष्ठंहिपरब्रह्म॥३०॥ इदानींविश्वकर्मा मनुष्या-
णामुपदेशंददाति। नतंविदाथ। नविदाथनजानीथ तंपरं पुरुषम्। यइमानिभूतजातानि
जजानजनयति। उपसंहरतिच अतः कारणात् युष्माकंच तस्यचपुरुषस्य। अन्यत् महत्
अन्तरंबभूव पुरुषोजनको यूयंजन्याः पुरुषोन्नामको यूयंनाम्याः। यदित्वात्मत्वेनोपा-

सत्युः॥३०॥ नतम्॥ नतंविदाथयइमाजजानान्यद्युष्माकमन्तरम्ब
भूव॥*नीहारेणप्रावृताजल्प्याचासुतृपंउक्थशासश्चरन्ति॥३१॥

पास्यध्वं नसंसृतिः स्यादित्यभिप्रायः। एवंप्रत्यक्षानुक्त्वा अथेदानीं परोक्षानभिनयेन दर्शयन्नाह।
येचैते। नीहारेणअविद्ययाप्रावृता अवगुण्ठिताः। येजल्पया प्रावृताः। पक्षहेतुदृष्टान्तैरा-
त्मज्ञानंजल्पिः। कुतःकिंकाभिप्रायमेतत्। येचअसुतृपः। असून्प्राणान्तर्पयन्ति असुतृपः

* निवारणहारयोरनवग्रहे नि इत्ययमुपसर्गो वारहारयो प्रत्यययोर्दीर्घं मापद्यते अवग्रहवर्जिते।

* उक्थशासश्चरंतो त्यत्रउक्थाजशसे। उक्थशब्दात्परस्य शसेर्धातोऽङ्गस्यो दीर्घं मापद्यते इत्यर्थकेनसूत्रं णदीर्घादेशो
विधियते। प्रा॰ अ॰। २ सू॰ १२४।

अलंकरिष्याव: । तैरपिसहमहदेवान्तरंबभूव । येतु उक्थशास: उक्थानांशंसितार: । उक्थानिच यत्नेशस्यन्ते अतोयज्वानोगृह्यन्ते। येयज्ञशीलास्तेपुरुषं प्रतिविचरन्ति। येतुपुरुषविद: तेपुरुषएवभवन्ति। नीहारप्राप्तास्तु नरकयायिन: ॥ ३१ ॥ विश्वकर्माहि। विश्वकर्मा आदित्यान्तर: पुरुष:। अजनिष्टजात:। देव: दानादिगुणयुक्त:। आत् इत् निपातौ

विश्वकर्माहि ॥ विश्वकर्माह्यजनिष्टदेवऽआदिद्गन्धर्वोऽअभवद्द्वितीय: ॥ तृतीय:पिताजनितौषधीनामपाङ्गर्भंव्यदधात्पुरु

अथानन्तरम्। गन्धर्व: गौर्वाचोधारयिता पृथिव्यावाधारयिता गन्धर्वोऽग्नि:। गानाद्वागन्धर्वोऽग्नि:। अथोआहु:। गन्धर्वोअग्निरेवासौ पृष्ठेसर्वकत्सोम न्यमानोऽ गायदित्यादिश्रुति: अभवत् द्वितीय:। सहायाय। तृतीय: पिता। पालयिताजनयिताच ओषधीनाम्। पर्जन्य: अभवत्। सचोत्पन्न: सन् अपामाकृतिपरिणामभूतानाम् गर्भंविश्वदधात् धारयति पुरुत्रावह्वना-

ताता । यद्वा अपांगर्भंविदधाति पृथिव्यांवह्नु प्रकारम् (१) ॥ ३२ ॥ (२) आशुः शिशानः । अनुवाकः । अप्रतिरथऋषिः । ऐन्द्रोमतिरथोपश्यत् । समोणितइत्यन्तः । आदितोद्वादशैन्द्र्यस्त्रिष्टुभो ब्रह्मादक्षिणतोजपति । आशुः शीघ्रः शिशानः । शोतन् करणे । निश्यानोवज्रम् । वृषभो नभीमः । वृषभइवभीमः । भीमोबिभ्यत्यस्मादिति । घनाघनः । हनहनेत्येत्रा ॥ ३२ ॥ [ ८ ] आशुःशिशानः ॥ आशुःशिशानोवृषभोनभीमो घनाघनःक्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषऽएकवीरःशतꣳ

यवत्ता । यद्वा घनशरीरः । क्षोभश्चर्षणीनाम् । संचालकः चर्षणीनामनुष्याणाम् । संक्रन्दनः । समाह्वाता संग्रामकारिणाम् । आह्वयच । अनिमिषः । अप्रमादी । यद्वा अनिमिषोदेवा । एकवीरः एकएवासहायो विक्रान्तः । यईदृग्गुणविशिष्टः सः सतंवह्वः सेनाः

(१) वैश्वकर्मण होम समाप्त ।

(२) आह्वनीये प्रणीयमानेऽप्रतिरथस्य द्वादश त्रृषवग्नो सर्वत्रैके । अग्नो चयने इध्ममादोप्याहवनीये चितया प्रति नीयमाने यद्याप्रतिरथसूक्तस्य द्वादश ऋचो जपन्दक्षिणतोऽनुगच्छतीति सूत्रार्थं ।

अन्वयत् नयति। साकंसचैव। इन्द्रः ॥ ३२ ॥ संक्रन्दनेन शब्दकारिणा अनिमिषेण एक-
चित्तेन। अप्रमादयतावा। जिष्णुनानयनशीलेन। युत्कारेण। युधसंप्रहारे। असयक्षि-
पियत्। संप्रहारकारिणा। दुश्च्यवनेन अप्रच्याव्येन अप्रच्युतस्वभावेनवा। धृष्णुना। प्रस-
ह्नशीलेन। तदिन्द्रेणजयत। ईदृग्गुणविशिष्टेनेन्द्रेण तज्जयत। दुर्जयमितिशेषः तत्व-

सेनांऽअजयत्साकमिन्द्रः ॥ ३२ ॥ सुङ्क्रन्दनेनानिमिषेण ॥ जिष्णुना
युत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदिन्द्रेणजयततत्सहद्ध्वंयुधो
नरऽइषुहस्तेनवृष्णा ॥ ३४ ॥ सऽइषुहस्तैः ॥ सऽइषुहस्तैःसनि
षङ्गिभिर्वशीसंस्रष्टासयुधऽइन्द्रोगणेन ॥ संसृष्टजित्सोमपावा

सहध्वम् तत्वाभिभवत हे युधः युधसंप्रहारइत्यस्यतत्क्विपि बहुवचनम्। हे योद्धारः। पादादाव-
भिमन्त्रितस्य चेत्यादि रुदात्तः। हे नरः मनुष्याः इषुहस्तेनेन्द्रेण। इष्वासेक्त्रा वर्षणशीले-
नवा ॥ ३४ ॥ सइषुहस्तैः। सइन्द्रः इषुहस्तैः। योद्धृभिः संसृजति सइषुहस्तानेवयोद्धृन्। सनिष-

ङ्गिभिः । सएवेन्द्रोनिषङ्गिभिः खङ्गिभिः संसृजतिनिषङ्गिनएवयोद्धुन् स्वान् । किञ्च । वशी । कान्तः सर्वजनप्रियोवा स्वतंत्रो,वानिगृहीतादि षड्वर्गोवा ईश्वरोवा । सएवेन्द्रोयुधः योद्धून्स्वान् शत्रुगणेन संसृष्टा । किञ्च संसृष्टजित् संसृष्टाञ्जयतिशत्रून् । सोमपाश्चबाहुशर्द्धीच बाहुबलः संग्रामेबल निरपेक्षः । शर्द्ध इतिबलनाम उग्रधन्वा उद्यतधनुः । प्रतिहिताभिरस्ता । शत्रुशरीरेषु

हुग्रद्धुंग्रधंन्वाप्रतिंहिताभिरस्तां ॥ ३५ ॥ बृहंस्पतेपरिं ॥ दीया रथेंनरक्षोहामित्राँ ॥ऽअपबाधंमानः॥ प्रभुञ्जन्त्सेनाःप्रमृणोयुधा जयंन्नुस्माकंमेध्यविता रथांनाम् ॥३६॥ बुलविज्ञायस्थविंरः ॥ बु

प्रतिनिहिताभिरिषुभिः इन्द्रः अस्ताक्षेप्तेलनुमीयते लघुसंप्रधानोलक्षपातीवा इत्यभिप्रायः ॥ ३५ ॥ हे बृहस्पते । हे बृहस्पते । परिदीया दीयतिर्गतिकर्मा । परियाहि रथेन । रक्षोहारक्षसांहन्ता । अमित्रान् शत्रून् । अपबाधमानः । किञ्च प्रभञ्जन्प्रमर्दयन् सेनाः । प्रमृणोयुधाजयन् मृणाति- र्हिंसार्थः । तस्यक्विपिद्वितीया बहुवचनम् प्रमृणःहिंसकान् युधायुद्धेनजयन् अस्माकम् एधि

भत्र अजितागोत्रा। रथानाम् वृहस्पतिरपीन्द्रस्य पुरोहितइतीन्द्रसंबन्धेनैव स्तूयते ॥ ३६ ॥

बलविज्ञायः। यस्त्वं बलमाविष्कुर्वन्विज्ञायसे अयमिन्द्रइति। स्थविरश्च सर्वानुशासकः सर्वेभ्यो-न्योवाचिरन्तनोवा। प्रवीरश्चअभिवीरः वीरंवीरमभि अभिवीरः। अभिसत्त्वाच सत्वंसत्त्व-

लविज्ञायस्थविरःप्रवीरःसहस्वान्वाजीसहमानऽउग्रः॥ *अभिवीरोऽअभिसत्त्वासहोजाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥ ३७ ॥ गोत्रभिदङ्गोविदम् ॥ गोत्रभिदङ्गोविदंवज्रबाहुञ्जयन्तमज्मप्रमृण

मभि अभिसत्त्वा। सहोजाश्च सहइतिबलनाम। बलात् जातः। नह्यन्यस्माज्जात इत्थं-बलः स्यात्। सत्रं जैत्रं नेतारं हेइन्द्र। रथम् आतिष्ठ। गोवित् सन्। स्तुतिवित्सन्। गोश-ब्दोवाग्वचनः ॥ ३७ ॥ गोत्रभिदम्। असुरगोत्रभिनत्तीतिगोत्रभित्। अथवागोत्रइतिमेघनाम-

---

* अभिवीरइतात्र अश्वरश्मिमतोतरादि नासत्रे अयभीतारयदीर्घ प्राप्त अभि विप्रेयं ध्वीरविश्रव ध्वतसहश्वाज यस्मेषु एतेषुपरेषु अभीतीरतत्पदं नदीर्घ माप्यते प्रा० अ० ३। सू० १००

मुपठितम्। सहिगाः अपः नायते। तस्गोत्रस्यमेघस्यभेत्तारं हृष्टरथंम्। गोविदम् उपलब्धा-रम्। यद्वा। वाग्विदंस्तु तेविदम् पण्डितंवा। वज्र बाहुंवज्रपाणिम् जयन्तम् जयतेर्गत्यर्थस्य। अज्म अज्मतिसंग्रामनाम। संग्रामंगच्छन्तम्। प्रमृणन्तम् ओजसा। मृणातिर्हिंसाकर्मा। प्रमर्द-यन्तंबलेन। इममिंद्रम् हेसजाताः समानजन्मानोदेवाः। अनुवीरयध्वम् वीरकर्मकुर्वाण मनु-

न्तुमोजसा॥ इमꣳसंजाताऽअनुवीरयद्ध्वमिन्द्रꣳसखायोऽअनुसꣳर भद्ध्वम्॥ ३८॥ अभिगोत्राणि॥ अभिगोत्राणिसहसागाहमा नोदयोव्वीरःशतमन्न्युरिन्द्रः॥ दुश्च्यवनःपृतनाषाडयुद्ध्योस्माक ꣳसेनाअवतुप्प्रयुत्सु॥ ३९॥ इन्द्रऽआसाम्॥ इन्द्रऽआसान्नेताबृह

गम्यवीरकर्मणिवप्रोत्साहयत हेसखायःसमानस्थानाः देवाः अनुसंरभध्वम् अनुसंगम्य रभसंकु-रुत।३८॥ अभिगोत्राणि। अभिगाहमानोगोत्राणि असुरकुलानि। मेघवृन्दानिवा। सहसाबलेन। (१) अदयोनिर्घृणः। वीरः विक्रान्तः। शतमन्युः बहुक्रोधः इन्द्रः। दुश्च्यवनः अप्रच्याव्यः।

(१) दयारहित इति घ पुस्तके पाठः।

पृतनाषाट्। पृतनांसंग्रामं सहतेऽभिभवति। अयुध्यः अविद्यमानप्रतियोधा। यद्वेत्थंभूतइन्द्रः सोऽस्माकंसेनाम् अवतुपालयतु। युत्सुयुद्धेषु ॥ ३९ ॥ इन्द्रआसाम्। देवत्सुसेनानां व्यूहर-चनात् इन्द्रआसांनेताभवतु। बृहस्पतिश्च। मन्त्रोप्रधानानिहिकार्याणिकरोति। दक्षिणा-यज्ञः। दक्षिणतोयज्ञः एतु। पुरएतुसोमः। पुरस्तादागच्छतुसोमः। यद्वा। दक्षिणा-

## स्पतिर्दक्षिणा यज्ञः पुरऽएतु सोमः ॥ देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥ ४० ॥ इन्द्रस्य वृष्णः ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञऽआदित्यानां मरुताᳬ शर्द्धऽउग्रम् ॥ महामनसां भुवन

पुरस्तात् एतु यज्ञश्चसोमश्च। केषामित्यतआह। देवसेनानाम् अभिभञ्जतीनाम्। भञ्जो-आमर्दने जयन्तीनाम्। मरुतः गणभूताः यन्तुअग्रम् निरुध्य ॥ ४० ॥ इन्द्रस्यवृष्णः। इन्द्रस्य-वर्षितुः। वरुणस्यराज्ञः। आदित्यानांमरुतांचशर्द्धः बलंहस्त्यश्वरथपदातिलक्षणम्। उग्रम् उद्गूर्णायुधम्। उदस्थादित्यनुषङ्गः। यदाचैतदुदस्थात् अथानन्तरमेव। महामनसाम् अक्लिष्ट-

मनसाम। भुवनच्यवानाम् भुवनच्यावनसमर्थानाम् घोषः शब्दः देवानांजयताम्उदस्थात् उत्थितः। जतंजितमिति ॥ ४१। उद्धर्षय। उद्गतहर्षान् कुरु हे मघवन् आयुधानि। उत्सत्वनाम्। उद्धर्षयचस-त्वनाम्। सत्वानांमनुष्याणाम् मामकानामदीयानां। मनांसि उद्धर्षय हे वृत्रहन् वाजिनामश्वानाम् वाजिनानि वेजनवन्त्यानि। वज्जलवं च्यवसगुणः। उद्रथानांच जयतांयन्तुघोषाः। उद्यन्तुच्च

च्च्युवानाङ्घोषोदेवानाञ्जयंतामुदंस्थात् ॥ ४१ ॥ उद्धंर्षय ॥ मघवुन्ना युधान्न्युत्सत्वंनाम्मामुकानाम्मनांᳪसि ॥ उद्वृंत्रहन्न्वाजिनांव्वाजिं नान्न्युद्रथानाञ्जयंतांय्यन्तुघोषाः ॥ ४२ ॥ अुस्म्माकुमिन्द्रः ॥ समृं तेषुद्ध्वजेष्ष्वुस्म्माकंय्याऽइषंवुस्ताजंयन्तु॥ अुस्म्माकंव्वीराऽउत्तंरेभव

त्वत्प्रसादात् रथानांचजयतां मेघोषाः शब्दाः ॥ ४२ ॥ अस्माकमिन्द्रः। अस्माकंतावत् समृतेषु स गतेषुध्वजेषु शत्रुवलध्वजसोजीभूतेषु। इन्द्रोरक्षिताभवतु इंद्रप्रसादादेव अस्माकंयाइषवः ताःजयन्तु। अस्माकंचवीरा उत्तरे विजयिने भवन्तु। अस्मान् उविनिग्रहार्थोदेवकारः। अस्मा-

नेव हेदेवाः अवतरच्चत । हवेषुआह्वानेषु ॥ ४३ ॥ अमीषाञ्चित्तम अप्वादेवता साचपुन-र्व्याधिर्वा भयंवा । यस्मादेतया विद्वोव्याप्तः अपचीयते नयाभच्यमाणः तस्मादप्वा अपशब्दा-ख्याकारलोस्त । सूक्तटाप् ऐन्द्र्योभिरूपा द्वादशभवंतोतिश्रुतिः । इयमपीन्द्र सेनासंवन्धिनी ।

न्त्वस्म्मा२ँ ॥ ऽउदेवाऽ *अवताह्वेषु ॥ ४३ ॥ अमीषाञ्चित्तम् ॥ अमीषाञ्चित्तम्प्रतिलोभयन्तीगृहाणाङ्गान्यप्वेपरेहि ॥ अभिप्रेहिनिर्दहहृत्सुशोकैरन्धेनामित्रास्तमसासचन्ताम् ॥ ४४ ॥ अवंस्

अमीषाम् संवन्धिनांमनुष्याणाम् चित्तम् चित्तानीतिवचनव्यत्ययः प्रतिलोभयन्ती । लुभविमो-हने । विमोहयमाना । गृहाणामङ्गानि हेअप्वे ततःपरेहि । परागच्छ पुनरन्यान्शत्रून्गृहीतुम् अतोभूयो भूयोकरणेनैतानेवशत्रून भिप्रेहि । निर्दहचैषां हृदयानिशोकैः । हृत्स्वितिसप्तमीव-ह्वचनं द्वितीयावहुवचनस्थाने । हृदयानिनिर्दहशोकैः । यथाअंधेन ध्यानलक्षणेन अमित्राः

* पिवासोममपि वासुतस्य त्यादिसूक्ते प हवेषुपरेऽवतेतर कारस्यदीर्घादिये अवताह वेष्वितिसिद्धम्

तमसामचन्त.म् तमसासंसेव्यंताम् तमसासंश्लिष्यंताम् । द्वादशैन्द्र्यःसमाम्नाः ॥ ४४ ॥ पृष्-
ग्विनियोगमंत्रा: । अवसृष्टा इषुदेवत्यानष्टुप् । परावसृष्टानिक्षिप्ता परापतपरागच्छ ।
हे शरव्ये शरमयीइषुःशरव्या । हे ब्रह्मसंशितेब्रह्मणाभिमंत्रिते अभिमंत्र्यअतितरां तीक्ष्णी-
कृते गच्छपरापत गच्छेत्यातिशयार्थं एकार्थयोराख्यातयोर्द्विवचनम् अमित्रान्प्रपद्यस्व । माच

ष्ठामपरां ॥ पतशरव्येब्रह्मसंशिते ॥ गच्छामित्रान्प्रपद्यस्वमामी
षांकञ्चनोच्छिषः ॥ ४५ ॥ प्रेत ॥ प्रेता *जयतानरइन्द्रोवःशर्म्मय
च्छतु ॥ उग्रावःसन्तुबाहवोऽनाधृष्यायथासथ ॥ ४६॥ असौया ॥

अमीषाममित्राणां कञ्चन उच्छिषःउच्छेषय । उद्धृतमूलान्कुर्वित्यभिप्रायः ॥ ४५ ॥ प्रेत ।
योद्धृःस्तौति । अनुष्टुप् हेनरःमनुष्याः प्रेतगच्छत ॥ जयतच इन्द्रश्चवःशर्म । शरणं
परित्राणम यच्छतुददातु । उग्राःउग्राणायुधाः वःयुष्माकम् सन्तुबाहवः । अनाधृष्याः अप्र-

* धारयामयेोजात्वसचस्वे तादिसूत्रेण जयतानर इत्यत्रनकारे जयतेतस्यदीर्घ प्रा० अ० ३ । सू० १०८ ॥

घृष्याः यथायूयम असथभवथ । तथाउग्राःसन्तु वा इवदृत्यनुषङ्गः ॥ ४६ ॥ असौया । मारुतीत्रि-ष्टुप् । अमौयासेनाहेमरुतः परेषांशत्रूणाम् अभिऐति अभ्यागच्छति नःअस्मान्प्रति ओजसाचले-नस्पर्द्धमाना । तांसेनांगूहतव्यामुत । तमसाअपव्रतेन व्रतमितिकर्मनाम । अपगतकर्मणा । येनत-मसाव्याप्तानां नश्यंकर्माणितदपव्रतंतमःतेनापव्रतेनतमसावागूहतयेथामौअन्योअन्यंनजानन् । यथा-

सेनामरुतःपरेषामभ्यैतिनऽओजसास्पर्द्धमाना ॥ ताङ्गूहततमसा पव्रतेनयथामीऽअन्योऽअन्यन्नजानन् । ४७ ॥ यत्रबाणाः ॥ सम्प तन्तिकुमाराव्विशिखाऽइव ॥ तन्नऽइन्द्रो बृहस्पतिरदितिःशर्म्मय

अमौसैनिकाःअन्योन्यंपरस्परंनजानीयुः ॥ ४७ ॥ यत्रबाणाः । लिङ्गोक्तदेवतापंक्तिः । यत्रबाणा इषवःसंपतन्ति अनिमर्यादम् । कथमिव कुमाराविशिखाइव । यथाकुमाराअदृष्टपरिकारिणः विगतशिखाःसर्वमुण्डाः तन्तमर्थंसंनिपतेयु रेवंसंपतन्ति तत्रेत्यर्थः । नः अस्माकम् इन्द्रः शर्मशरणम् यच्छतुददातु । बृहस्पतिःशर्मयच्छतु । अदितिः शर्मयच्छतु विश्वाहासदाकालंच

शर्मयच्छतु । इन्द्रःबृहस्पतिःअदितिः ॥ ४८ ॥ (१) मर्माणिते । लिङ्गोक्तदेवतात्रिष्टुप् । कवचंप्रयच्छ ते मर्माणितेतववर्मणाकवचेनच्छादयामि । सोमस्त्वाराजात्वाम् अमृतेनअनुवस्ताम् आच्छादयतु । किञ्च उरोर्वरीयोवरुणस्ते कृणोतु । पृथोरपिपृथीयः वरुणःतवकवचं करोतु ।

च्छतु * विश्वाहाशर्म्मयच्छतु ॥ ४८ ॥ मर्म्माणिते ॥ मर्म्माणितेव्व र्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ॥ उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥ ४९ ॥ [ १७ ] उदेनम् ॥

किञ्च जयन्तंत्वाम् अनुमदन्तु उत्साहयन्तुदेवाः ॥ ४९ ॥ (२) उदेनम् । समिधमादधाति ।

( १ ) का० मर्माणि तद्दति कवच प्रयच्छति । महाव्रते यागेऽध्वर्यु क्षत्रियाय सन्नाहं परिधानाय प्रयच्छतीत्यर्थः ।

( २ ) का० आर्द्रौदुम्बरीष्टं तोपितास्विव उदेनमित्यादधाति प्रत्यृचम् अशुष्का उदुम्बरतरुत्था रात्रौ घृते स्थिता प्रादेशमात्रीस्तिस्र समिधः ऋक्त्रयेण गालाकारं जुहोति ततोऽग्निप्रणयनमित्यर्थः ।

---

* विश्वाहेतरत्र नरहामित्रे पुच । १०२ । नरहामित्रे पुचप्रत्ययेषु विश्वशब्दो दीर्घमाप्यते इतिसूत्रेण द्वापरेविश्वशब्दस्य दीर्घ प्रा० च०२ ।

तिसृभिरनुष्टुब्भिः तत्रप्रथमाग्नेयी द्वितीयेन्द्रीतृतीया लिङ्गोक्तदेवता । उदेनमुत्तरान्नय । एनं-
यजमानम् उन्नततराम् हेअग्ने । घृतेनआहुतिसंबन्धेन आहुतअभिहुत । जुहोतेरेतद्रूपं
नतुह्वयतेः रायस्पोषेणच धनस्यपुष्ट्यासंसृज । प्रजयाच बहुपुत्रपौत्रसंकुलंकुधिकुरु ॥ ५० ॥ इन्द्रेमम्
हेइन्द्र एनंयजमानम् प्रतरान्नय । सजातानांचसमानजन्मनांच । असत् भवतुवशीकान्तः

उदेनमुत्तरान्नयाग्ग्ने घृतेनाहुत ॥ रायस्पोषेणसᳲसृजप्रजयाचब
हुङ्कधि ॥ ५० ॥ शतम् १०० इन्द्रेमम् ॥ इन्द्रेमम्प्रतरान्नयसजाता
नामसद्वशी ॥ समेनंवर्च्चसासृजदेवानाम्भागदाऽअसत् ॥ ५१ ॥ यस्य
कुर्म्मोगृहेहविस्तमग्ग्नेवर्द्धयात्त्वम् ॥ तस्मैदेवाऽअधिब्रुवन्नयञ्चब्र

ईश्वरोवा । किञ्च समेनंवर्चसासृज संसृजचएनंयजमानं । वर्चसा स्वेनस्वेनकर्मणावर्णोना-
मुत्कर्षोवर्चः । देवानांचभागदाः असत्भवतु । यज्ञसमाप्तिंत्यत्प्रमादात्प्राप्नोत्त्वित्यर्थः ॥ ५१ ॥
यस्यकुर्मः । यस्ययजमानस्य कुर्मःगृहेहविः तंहिअग्नेवर्द्धय त्वंप्रजयापशुभिश्च । तस्मैदेवाअ-

धिभुत्रन् । उपरिभावेन यत्प्रशस्तंकल्याणन्तत्नुवन्तु । अयंमह्मणस्पतिरग्निः ॥ ५२ ॥ अग्नि-मुद्यच्छति । (१) उदुत्वेतिव्याख्यातम ॥ ५२ ॥ चित्यं गच्छन्ति । पञ्चभिऋग्भिर्यज्ञांगसाधनवा-दिनीभिः । (२) पञ्चदिशः । देविष्टुभौ । पञ्चदिश.दैवी:देवानांसंवन्धिन्यः यज्ञमूत्रवन्तुपालयन्तु ।

ह्मंणस्पस्तिः ॥५२॥ उदुंत्वा ॥ उदुंत्वाव्विश्वेदेवाऽअग्नेभरंन्तुचित्तिंभिः ॥ सनोंभवशिवस्त्वᳬसुप्प्रतींकोव्विभावंसुः ॥५३॥ पञ्चदिशंः॥पञ्चदिशोदैवीर्यज्ञमंवन्तुदेवीरपामतिन्दुर्मतिम्बाधंमानाः॥

स्नयंवदेव्यः । क्रिंकुर्वाणायज्ञमवन्तु । अपामतिन्दुर्मतिंबाधमानाः । अमतिमुत्रमननम् अज्ञा-नम्अमतिः । दुर्मतिंच किञ्चरायस्पोषेधनस्यपुष्टौ । यज्ञपतिंयजमानम् आभजन्तीभागिनंकु-

(१) का० विरतायामुच्यमोदु त्वेति होता प्रथमायामृचि ति पठितायां सत्यां प्रतिप्रस्थाता उदु त्वेति मन्त्रेण प्रदीप्तमिध्मं ग्यालाद्यार्यादूर्ध्वमुत्पाटयतीतर्थः ।

(२) का० चितां प्रतिगच्छन्ति पञ्च दिश इति ततो ब्रह्मादिऽध्वर्युः प्रतिप्रस्थात्रयजमाना पञ्च दिश इत्याद्यऋक्पञ्चकेन चितां प्रति गच्छन्ति । सवर्णा मन्त्रपाठ इति कर्क अध्वर्योरेवेति हरिस्वामिन इत्यर्थः

वंत्य: । रायस्पोषेच अधिउपरि । यज्ञ: अस्थात्तिष्ठतु । दिग्भिरेवस्थापित: अभिहुत: ॥ ५४ ॥ समिद्धे अग्नौ । असंनद्धानिवाक्यानि यद्योगातद्योगाच्च संनद्धानिभवन्ति । य: समिद्धेसम्यग्दीप्ते अग्नौप्रणीयमाने अधिमामहान: इजमानोवैमामहान इतिश्रुति: । मह पूजायाम् । उपरिभावेनदेवाना मत्यर्थंपूजक: । आत्मानम्बाहतकृत्यं मन्यमानोग्नि मनुगच्छति । यस्यच उक्थ-

रायस्पोषेयुज्ञपंतिमाभजन्तीरायस्पोषेऽअधियुज्ञोऽअस्थात् ॥ ५४॥ समिद्धेऽअग्नौ ॥ समिद्धेऽअग्नावधिमामहानऽउक्थपंत्रऽईड्यो गृभीतः॥तुप्तङ्घर्मम्पंरिगृह्यायजन्तोर्जायद्यज्ञमयंजन्तदेवाः॥५५॥

पत्रोग्नि: प्रणीयमान: अग्निष्टोमे उक्थानिभवन्ति तदंगभूतएवायमग्नि: । ईड्य: यज्ञिय: । गृभीत: गृहीतोधारितोध्वर्युणा यस्यचमामहानस्य तप्तंघर्मं परिगृह्यपरीशासाभ्याम् अयजन्तर्त्विज: यस्यचऊर्जेन अन्नेनहविर्लक्षणेन । यज्ञमयजन्त संगतंवाकृतन्त: देवाऋत्विज: । सोयंकृतकृत्यइतिशेष: ॥ ५५ ॥ देव्यायधर्त्रे इष्टतीवापंक्तिर्वा । यस्मैअग्नये देव्याय देवानां

संबन्धिने । धर्त्रं धारयितृ जगतः । जे ष्टं ये॒ोपयिष्टतमाय । पयोदानार्थंनीयत इतिवाक्यशेषः यश्चदेवश्यो: देवाश्रस्यशेयः । श्रीमनाः भक्तेभ्यः श्रियंदातुकामः । श्रीर्वायस्यमनसिवसति: । शतपया: । वह्ननिपयांस्यन्नानि यस्यासौबहुपयाः । परिगृह्यगृहीत्वा । देवाः ऋत्विग्य- जमानाः यज्ञंकर्तुंमागच्छंति । तंदेवाऋत्विग्यजमानाः देवेभ्यः यज्ञंकर्तुंकामाः । देवेभ्योऽश्र- द्धयंन्तः श्रश्वंकामयमानाः श्रस्युपरिवार्यस्थिताः ॥ ५९ ॥ वीतठं० हविः । इष्टतौ । वीतम्

दैव्या॑य धर्त्रे ॥ जोष्ट्रे॑ दे॒वश्रीः॒ श्रीम॑नाः श॒तप॑याः ॥ प॒रि॒गृह्य॑ दे॒वा य॒ज्ञमा॑यन्दे॒वा दे॒वेभ्यो॑ऽअध्व॒र्यन्तो॑ऽअस्थुः ॥५६॥ वी॒तꣳ ह॒विः ॥ श॒मि॒तꣳ श॒मि॒ता य॒जध्यै॑ तु॒रीयो॑ य॒ज्ञो यत्र॑ ह॒व्यमेति॑ ॥ ततो॑ वा॒का ऽआ

कामितमिष्टमभिप्रेतम् । शमितम् सुसंस्कृतंमन्त्रैः । शमिता । शमित्वेतिव्यत्ययोवाक्यशेषात् । यजध्यै यागाय । तुरीयश्चालयज्ञोभाति । यत्रइत्थभूतंहव्यंहविरेति । अध्वर्युः पुरस्ताद्यजूं- षिजपति होतापश्चादृचोन्वाह ब्रह्मादक्षिणतोपरिथं जःत्येषएवतुरीयश्चतुर्थोयज्ञः । ततः

तस्मात्पञ्चाद्दुत्थिताः याकाः वचनानिऋग्यजुः सामलक्षणानि। आशिषश्च नोस्मान् जुष-न्तांसेवन्ताम् यज्ञफलमस्मानालिङ्गयन्त्वित्यर्थः॥ ५७॥ सूर्यरश्मिर्हरिकेशः। त्रिष्टुप्। असौ-वाआदित्यएषोग्निरितिश्रुतिः। यः सूर्यरश्मिः सूर्यसदृशरश्मिः हरिकेशः हरितवर्णकेशः। सः पुरस्तात् सवितृरूपेण ज्योतिः उदयान् उद्गच्छति। अजस्रमनुपक्षीणम्। तस्यचाग्नेः

शिषोनोजुषन्ताम् ॥ ५७ ॥ सूर्य्यरश्मिर्हरिकेशः पुरस्तात्सविताज्ज्योतिरुदयाँ२॥ अजस्रम्॥ तस्यपूषाप्रसवेयातिविद्वान्त्सम्पश्यन्विश्वाभुवनानिगोपाः ॥५८॥ विमानऽएषदिवोमध्यऽआस्तऽआपप्रिवान्रोदसीऽअन्तरिक्षम् ॥ सविश्वाचीरभिचष्टेघृताचीरन्तरापूर्वमपरञ्चकेतुम्

पूषाप्रसवे याति विद्वान् । स्वमधिकारंजानानः । पशवोवैपूषेतिश्रुतिः । लक्षणया-सचाग्निर्याति। प्रणीयमानः। सम्पश्यत् विश्वाविश्वानिभुवनानि। भूतजातानि । गोपाः गोपायितासमस्तजगतः। ॥५८॥ आग्नेय्ये अश्मानंपृश्निमुपदधाति विमानएषइतिद्वाभ्यां

विष्टुभ्यामादित्य देवत्याभ्याम्। यएषआदित्यो विमानोनिर्मांताभूतग्रामस्य। दिवोमध्येआस्ते। द्युलोकस्यमध्येआस्ते। अपमिवान्। मापूरणे। आपूरयन् रोदसीद्यावापृथिव्यौ अन्तरिक्षं च। स्वकीयेनप्रकाशेनापहृत्य शार्वरन्तमः। सविश्वाचीरभिचष्टे घृताचीरभिचष्टे घृताचीः। विश्वं हविरञ्चितमस्या मिति विश्वाचीर्वेदिः। घृतमस्यामञ्चनमिति घृताचीस्रुक्। वेदीश्चस्रुचश्चा-भिपश्यति। यज्ञङ्कर्तु नेतु गृहीतुं पश्यतीत्यर्थः। अन्तरापूर्वमपरं चकेतुम्। अन्तराअन्तरेण।

तुम् ॥ ५८॥ उक्षासंमुद्रः ॥ उक्षासंमुद्रोऽअंरुणः सुंपुर्णः पूर्व्वस्ययोनिं म्पितुराविंवेश ॥ मध्ये॑दिवोनिहिंतः पृश्निरश्मा विचंक्रमेरजंसस्पान्ता

पूर्वमिमंलोकम् अपरञ्चामुंलोकम्। किञ्च। केतुम् चितंजनानाम् तच्चसर्वमभिचष्टे भिप-श्यति। अथोयच्चेदमेतर्हि चीयते यच्चादः पूर्वमचीयते ॥ ५८॥ उक्षासमुद्रः। यउदयकाले उक्षामेचनः समुद्रः समुन्दनोभवति तस्मिन्कालेअवश्याया अतितरांपतन्ति तदभिप्रायमेतत्। अरुणः। वर्णतोनिर्देशः। सुपर्णः सुपतनः।। यश्चपूर्वस्य द्युलोकस्य। योनिम् स्थानम् पितुः पितृभूतस्य। ततोहिजायमान उपलभ्यतआदित्य इतिपिताद्युलोकः आविवेशआविशति।

उदितमात्र:। यश्चमध्येद्युलोकस्य निहित: अवस्थित:। रश्मि: समस्तरश्मिसंकुलो विचित्र:। अप्रसाशयनो व्यापक: सयात् मविचक्रमेवं क्रममाण:। रजत: रंजनस्य लोकत्रयस्य। पाति। गोपायति। अन्तोअन्तान् योह्यन्तान्पातिसमर्थ्यं पात्येव॥ ६० निधायैनमतिक्रामन्तिचतसृभि:। इन्द्रंविश्वा इतिव्याख्यातम्॥ ६१॥ देवहूर्यज्ञ:। तिस्रोनुष्टुभ:। आद्येद्वेउष्णिग्गौता। योदे-

त्यन्तौ ॥ ६० ॥ इन्द्रं व्विश्वां॰ ॥ इन्द्रं विश्वाऽअवीवृधन्त्समुद्रव्व्यंच सङ्गिरं॰ ॥ रथीतमंरथीनांव्वाजानाᳯसत्पतिम्पतिम् ॥ ६१ ॥ देवहूर्यज्ञ॰ ॥ देवहूर्यज्ञऽआचंव्वक्षत्सुम्नहूर्यज्ञऽआचंव्वक्षत् ॥ यक्षदग्निर्देवोदेवाँ२ ॥ आचंव्वक्षत् ॥ ६२ ॥ वाजंस्यमा ॥ प्प्रसुवऽउद्ग्राभेणो

वह्नि: देवान् आह्वयतियज्ञ:। सआचवक्षत्। आवहतुचदेवान् यजतुचेतिचकार: समुच्चयार्थीय:। यश्चसुम्नहू:। सुम्नमितिसुखनाम। सुखमाह्वयति यज्ञ: सआवहतुचदेवान् यजतु। किञ्च यक्षत् यजतुसअग्नि: देव: देवान् आचवक्षत् आवहतुच॥ ६२॥ वाज-

सभा। वाजस्यान्नस्य। मामाम् प्रसवः प्रसूतिरुत्पत्तिः अभ्यनुज्ञाता। उद्ग्राभेण उद्ग्रहणेन। ऊर्ध्वं निगृह्य धीयत इति उद्ग्राभः ग्रहणं दानं तेनेत्यर्थः। उदग्रभीत् उद्गृह्णीयात्। हग्रहोर्भश्छन्दसि हस्येति हकारस्य भकारः। अध अथ अनन्तरमेव सपत्नान् इन्द्रः मेमम निग्राभेण निचैर्ग्रहणेन नीचैर्हि हस्तं कृत्वाभि त्वादिर्गृह्यते याचिष्णुतया। अनन्ततयाच। अधरान् अधोगमनान् अकः

दॅग्रभीत्॥ अधासपत्नानिन्द्रोमेनिग्राभेणाधराँरँ॥ऽअकः॥ ६३॥
उद्ग्राभञ्च॥ निग्राभञ्चब्रह्मदेवाऽअवीवृधन्॥ अधासपत्नानिन्द्राग्नीमेविषूचीनान्व्यस्यताम्॥ ६४॥ [१५] क्रमध्वमग्निना॥ क्रमं

करोतु॥ ६३॥ उद्ग्राभंच। उद्ग्राभंच असद्विपर्यंनिग्राभंच यत्तु विपयम्। ब्रह्मचत्वयोत्तर्वर्ण यज्ञविपयम् देवाः अवीवृधन् वर्द्धयन्तु। अथसपत्नान् इन्द्राग्नी मेमम। विषूचीनान् विष्वगञ्चनान् नानागतोऽकृत्वा। व्यस्यतां विक्षिपन्ताम् अपुनरागमनाय॥ ६४॥ चित्यमारोहन्ति पञ्चभिः। (१) क्रमध्वम ग्निना। अनुष्टुप्। हेऽऋत्विग्यजमानाः। क्रमध्वम् आक्रमध्वम्।

(१) का० क्रमध्वमग्निनेति चित्यमारोहन्ति। ते ऋत्विज क्रमध्वमिति पञ्चभिस्तोर्यंन चित्याग्निमारोहन्तीत्यर्थः।

अग्निनाचित्येन लोकलोकान्यादिवपुपा। नाकन्दिवम्। उख्यम्। उखायांधृतम् अग्निम् उख्याम्। हस्तेपुबिभ्रतः धारयमाणाः। ततोदिवः पृष्ठमारुह्यस्वर्गलोकंगत्वा मिश्राः समानलोकस्थानायुषः देवेभिः देवैः सहआध्वम् आसनंकुरुतदेवोभूताः। आसेरेतद्रूपम् ध्वसमि-

द्ध्वमग्निनानाकमुख्यंᳬहस्तेषुबिभ्रतः॥ दिवस्पृष्ठᳬस्वर्गत्वा मिश्रादेवेभिराद्ध्वम्॥ ६५॥ प्राचीमनु॥ प्रदिशम्प्रेहिविद्वानग्ने रग्नेपुरोऽअग्निर्भवेह॥ विश्वाऽआशादीद्यानोविभाह्यूर्ज्जन्नोधेहि द्विपदेचतुष्पदे॥ ६६॥ पृथिव्याऽअहम्॥ पृथिव्याऽअहमुदन्तरि

सकारलोपेन॥ ६५॥ प्राचीमनु। त्रिष्टुप्। प्राचींदिशम् अनुप्रेहिप्रगच्छ। विद्वान् स्वमधिकारंजानानः। अग्नेः इष्टकास्थलरूपस्य। हेअग्ने: उख्यरूपप्रणीयमान। पुरोअग्निः। पुरोगामीअग्निर्भव इहयज्ञे। ततोविश्वाः सर्वाः आशाः दिशः दीद्यानः। आभासयन् विभाहि।

विधिर्धंदीपय। ऊर्ज्जंस्त्वनः धेहि। द्विपदे चतुष्पदे। द्विपाद्भ्यः। चतुष्पाद्भ्यश्च ॥ ६६ ॥ पृथि-
व्याअहम। पिपीलकमध्यादृहती। यजमानश्चाह। पृथिव्याः सकाशात् अहम् उदन्तरिक्षमा-
रुहम् ऊर्द्ध्वक्रमेण अन्तरिक्षमारूढः। अन्तरिक्षाच्चादिवमारुहम्। द्युलोकमारूढः। दिवः
नाकस्यपृष्ठमारूढः। नाकस्यपृष्ठाच्च स्वरादित्याख्यं ज्योतिः अगाम् आगतः प्राप्तोऽहंक्षिमीभूतः।

पृथिव्याऽअहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् ॥ दिवोनाकस्यपृष्ठात्स्वर्ज्ज्योतिर
गामहम् ॥ ६७ ॥ स्वर्यन्तः ॥ स्वर्यन्तोनापेक्षन्तऽआद्याᳪरोहन्ति
रोदसी ॥ यज्ञंयेविश्वतोधारᳪसुविद्वाᳪसोवितेनिरे ॥ ६८ ॥ अ

गार्हपत्यादाग्नीध्रीयमागच्छ त्वयादाग्नीध्रीया दाहवनीयमित्यादिश्रुतिः अग्नीनांलोकसंस्तवंद-
र्शयति ॥ ६७ ॥ स्वर्यन्तः। अनुष्टुप्। अवहितोऽर्द्धर्चः प्रथमव्याख्यायते यच्छब्दयोगात्।
यज्ञं येयजमानाः। विश्वतोधारं सर्वतोधारम्। आहुतिदक्षिणान्नानियज्ञस्यधाराः। ताभि-
र्द्यौर्वर्षति। यद्वा विश्वस्यजगतोधारयितारम्। वैश्वानरमारुतवसोर्धारा वाजस्यप्रसवीयानि

धारावायत्तस्य। सुविद्वांसः ज्ञानकर्मसमुच्चयकारिणः। वितेनिरे वितन्वन्ति। स्वर्यन्तः स्वर्लोकंगच्छन्तः नोपचन्ते पुनपश्चाद्दितकृत्यत्वात्। आरोहन्तिद्यांरोदसीदिव एतद्विशेषणम् नहु-द्यावापृथिव्यो रभिधानम् दिवइति स्वःशब्दोपादान सामर्थ्यात् कथभूतां द्यामारोहंति। रोद-सीरोभौ जरास्तुशोकादीनाम्॥ ६८॥ अग्नेप्रेहिप्रयाहि। प्रथमः देवयताम् देवान्यष्टु-

ग्नेप्र॥ अग्नेप्रेहिंप्रथमोदेवयताञ्चक्षुर्देवानांमुतमर्त्यानाम्॥ इयं

क्षमाणाभृगुभिꣳसजोषाꣳ स्वर्यन्तुयजमानाꣳस्वस्ति॥ ६९॥ नक्तोषा

सा॥ नक्तोषासासमनसाविरूपेधापयेतेशिशुमेकꣳ समीची॥

मिच्छताम। यस्त्वं चक्षुः देवनामपिचमर्त्यानां मनुष्याणाम्। ततस्त्वयिप्रथमंप्राप्ते सति। इयक्षमाणाः भृगुभि.। यागंकुर्वाणाः। भृगुग्रहणमार्षेया न चानत्र.ज्ञाणोपलक्षणार्थम्। सजोषाः समानजोषणाश्च देवैः सन्त.। स्वर्लोकम् यन्तुयजमानाः स्वस्तिअविनाशेन॥ ६९॥ पयसा-

भिजुहोति । (१) नक्तोषासा । व्याख्यातम् ॥ ७० ॥ अग्नेसहस्राक्ष । आग्नेयीविराट् । हेअग्नेसहस्राक्ष । हिरण्यशकलैर्वा एषसहस्राक्षः । शतमूर्द्धन् । यदद: शतशीर्षारुद्रो सृजत । यस्यचतव । शतंप्राणाः सहस्रं व्यानाः । यश्चत्वं साहस्रस्य रायोधनस्य हविर्लक्षणस्य

द्यावानामारुक्मोऽअन्तर्व्विभातिदेवाऽअग्निर्न्धारयन्द्रविणोदाः॥७०॥ अग्नेसहस्राक्ष ॥ शतमूर्द्धञ्छतन्तेप्राणाःसहस्रंव्यानाः ॥ त्वᳪसाहस्रस्यरायऽईशिषेतस्मैतेव्विधेमव्वाजायस्वाहा ॥ ७१ ॥ सुपर्णो

ईशिषे । तस्मैतेतुभ्यम् विधेम । विशातिर्दान कर्मा । दद्मः । वाजाय वाजमितिविभक्तिव्यत्ययः । वाजमन्नं हविर्लक्षणम् । स्वाहासुहुतमस्तु ॥ ७१ ॥ स्वयमातृण्णाया मग्निंनिद

(१) का० स्वयमातृण्णामध्यग्निं न्धारयंञ्छुक्लवत्सापयसाभिजुहोति कृष्णाया दोहनेन स्वयमातृण्णामवसिञ्चन्नक्तोषासेति । अध्वर्युं स्वयमातृण्णेष्टकोपरि समीपे प्रतिप्रस्थाता तमग्निं धारय न् कृष्णवर्णाया श्वेतवत्साया गोर्दुग्धं न मृन्मयदोहनपात्रेणजुहूस्थानीयेन स्वयमातृण्णा सिञ्चन्निघ्मस्थेऽग्नौ जुहोति नक्तोषासेत्यृग्द्वयेनेत्यार्थ ।

धाति। सुपर्णोसीति द्वाभ्यामाग्नेयीभ्यां पंक्तित्रिष्टुभ्याम्। यस्त्वं सुपर्णंवदसि। गरुत्मान् गरणवान् अशनायाशरीरः। सपृष्टे पृथिव्याः सीद अस्थानं कुरु। भासाचदीप्त्या न्तरिक्षम् आपृ-

सिगुरुत्त्मान्पृष्ठेपृथिव्याःसीद॥ भासान्तरिक्षमापृणज्ज्योतिषा दिवमुत्तभानतेजसादिशउद्दृ*ꣳह॥७२॥आजुह्वानःसुप्रतीकः॥ पुरस्तादग्नेस्वंयोनिमासीदसाधुया॥ अस्मिन्त्सधस्थेअध्युत्तर

णआपूरय। ज्योतिषाच दिवम् उत्तभान उत्स्तभान उत्तम्भय। तेजसादिशः उद्दृꣳह। तेजसाचदिशः दृढीकुरु। आदीपनार्थोवादृंहतिः॥७२॥ आजुह्वानः। अभिहूयमानः। सुप्रतीकः सुमुखः सन्। पुरस्तात्पूर्वस्यांदिशि। हेअग्ने। स्वंयोनिं स्थानम् आसीद अधितिष्ठ

---

* अनुस्वाररूपस्य ꣳकारस्यार्द्धमात्रिकता भवति व्यञ्जनं चार्द्धमात्रिकमिति शास्त्रात्, तथापि प्रातिशाख्यस्य "अनुस्वारो ह्रस्वपूर्वोऽध्यर्द्धमात्रा पूर्वा चार्द्धमात्रेति"। "दीर्घादर्द्धमात्रा पूर्वा चाध्यर्द्धेति" द्वाभ्यां सूत्राभ्यां मात्रैकमात्रा प्रतिपादिता, अत एव याज्ञवल्क्यमहर्षिणा शिक्षायां गुरौ ꣳकारे लघौ ꣳकारे दीर्घꣳकारे च क्रमेणाङ्गुष्ठाङ्गुलिप्रक्षेप उक्तः। अनुस्वारेऽङ्गुष्ठं पश्चाङ्गुष्ठाकुञ्चनं लघौ। दीर्घे रङ्गे च तर्जन्या प्रसारं परिकीर्तितं इति।

साधुया साधुक्रियाविशेषणत्वेन श्रुत्तराव्याख्यातम् । यूयमपिच हेविश्वेदेवाः यजमानश्चसीदत । अवस्थानंकुरुत । अस्मिन् सधस्थेसहस्थाने । अधियज्ञेस्वर्गाख्ये । स्वर्गोवैलोकः सधस्थइतिश्रुतिः । अध्युत्तरस्मिन् सर्वोत्कृष्टे । अवतृतीयः पादः पश्चाद्व्याख्यायते अर्थसंबन्धात् ॥ ७३ ॥ तिस्रः समिधआदधातितिसृभिः ऋग्भिः । अवकारवः साविच्या त्रिष्टुभापुरस्ता ज्योतिषा धेनुं-

स्मिन्निवश्वेदेवायजमानश्चसीदत ॥ ७३ ॥ ताᳬसवितुः ॥ ताᳬसंवितुर्वरेण्यस्यचित्रामाहंवृणेसुमतिंविश्वजन्याम् ॥ यामस्यकण्वोअदुहत्प्रपीनाᳬसहस्रधारांपयसामहीङ्गाम् ॥ ७४ ॥ त्रिधेमं

कामदोहनीं मयोययाचे । तांसवितुः । तांसवितुः संबन्धिनीम् । वरेण्यस्यवरणीयस्य । चित्रांचायनीयाम् आहणे आहणोमि स्वीकरोमि । सुमतिम् कल्याणमतिम विश्वजन्याम सर्वजनेभ्योहिताम् यांसुमतिंप्राप्य । अस्यसवितुः संबन्धिनीम् कण्वः अदुहत् । दुग्धवान् प्रपीनांपूरितांपयसा । सहस्रधारांबहुधारां बहवोवाकुटुंबस्य धारयित्रीम् । महीमहतीं गाम्॥ ७४॥

त्रिधेमते। त्रिस्थानोग्निर्देवता त्रिष्टुप्। विधेम:। विदधातिर्दानकर्मा। दद्म:। तेतुभ्यम्। परमेजन्मन् हेअग्ने परमेजन्मनिजातायआदित्यात्मनास्थिताय। द्यौर्वाअस्यपरमञ्जन्म। विधेम- स्तोमै: स्तुतिभि:। अवरेसधस्थे स्थितायविद्युदात्मना। अन्तरिक्षंवा अवरंसधस्थम्। यस्मा- त्योने: उत्आरिथा उद्गतौ। अस्यैतद्रूपम्। यस्माच्चस्थानादुद्गतोसि। यजे तत्स्थानमहम्

ते ॥ परमेजन्मंन्नग्नेव्विधेमुस्तोमैरवरेसुधस्थें ॥ यस्म्माद्योनैरुदारि थायजेतम्प्रत्त्वेहुवीᳬंषिंजुहुरेसमिंद्धे ॥ ७५ ॥ प्रेद्धोऽअग्ने ॥ प्रेद्धोऽअ ग्नेदीदिहिपुरोनोजंस्रयासूर्म्यायविष्ठ ॥ त्वाᳬंशश्वंन्तुऽउपंय

एषवाअस्यस्वोयोनि:। एषइतिचित्तोग्निरुच्यते। किञ्च प्रत्त्वेहवीᳬंषिजुहुरेसमिद्धे। जुहोमि त्वयिहवींषि समिद्धेसम्यग्दीप्ते ॥ ७५ ॥ प्रेद्धोअग्ने। आग्नेयीविराट्। प्रकर्षेणइद्ध: दीप्त: सन् हेअग्नेभूयोपि दीदिहिदीप्यस्व। पुर: अग्रत नोस्माकंव्यवस्थित:। एतयाअजस्रया अनुपक्षीणया। सूर्म्यासमित्काष्ठिकया। सूर्मीशब्द: काष्ठवचन:। सूर्मीं ज्वलन्तीं वाश्लिष्यादि-

तिचस्तुतिः । हेयविष्ठ युवतम । यतश्चत्वामेव शश्वन्तःशाश्वतिकाः उपदन्ति उपगच्छन्ति वाजाःअन्नानि अतोदीदिहीतिसंबन्धः ॥ ७६ ॥ तिस्रआकूतीर्जुहोति । अग्नेतमद्येतिव्याख्यातम् ॥ ७० ॥ चित्तिञ्जुहोमि । वैश्वकर्मणीजगत्यतिजगतीवा । चित्तिम चित्तमेपाम्यत्त्विग्यज-

न्तुश्वाजा॑ऽ ॥ ७६ ॥ अग्ने तम् ॥ अग्ने तमद्याश्वन्नस्तोमैःक्रतु न्नभद्रऽहृदिस्पृशम् ॥ ऋद्ध्यामात ऽओहैः ॥ ७७ ॥ चित्तिञ्जुहोमि ॥ चित्तिञ्जुहोमिमनसाघृतेनयथादेवा ऽइहागमन्वीतिहोत्राऽऋतावृधः ॥ पत्येविश्वस्यभूमनोजुहोमिविश्वकर्म्मणेविश्वाहादाभ्यऽ

मानानाम् जुहोमिअग्निसंवर्त्तं करोमि । अग्नितत्वपरिज्ञानचिन्तनसन्तानं करोमीत्यर्थः । मनसाच घृतेनचसह । तथाञ्जुहोमि । यथादेवाइहागमन् इहआगच्छेयुः । कथंभूताः वीतिहोत्राः कामितयज्ञाः । होत्राइतियज्ञनामसु पठितम् । ऋतावृधः सत्यवृधः किञ्च । पत्येविश्वस्यभूमनो जुहोमिविश्वकर्मणे । अधिपतिभूताय विश्वस्यभूतग्रामस्य । जुहोमिविश्वकर्मणे विश्वाहासर्वदा

